No. 15.]

THE

# VIZIANAGRAM SANSKRIT SERIES

UNDER THE SUPERINTENDENCE OF

ARTHUR VENIS M.A. OXON.

PRINCIPAL, SANSKRIT COLLEGE, BENARES.

THE

# ṄYÂYAVÂRTTIKATÂTPARYAṬÎKÂ

OF

VÂCHASPATI MISRA

EDITED BY

MAHÂMAHOPÂDHYÂYA GAṄGÂDHARA SÂSTRÎ TAILAṄGA

PROFESSOR, SANSKRIT COLLEGE, BENARES.

VOL. XIII.



PRINTED, PUBLISHED AND SOLD BY

E. J. LAZARUS & Co., BENARES.

MAY BE HAD ALSO FROM GANESH DAS AND CO, CHOWK, BENARES:
JAYESTHARAM MUKUNDJI AND CO., BOMBAY:
OTTO HARRASSOWITZ AND M. SPIRGATIS, LEIPZIG:
LUZAC AND CO., LONDON.

1898.

# न्यायवार्त्तिकतात्पर्यटीका



सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रविरचिता ।

काशिकराजकीयसंस्कृतपाठशालायां साहित्यदर्शनाध्यापकेन
महामहोपाध्यायगङ्गाधरशास्त्रिणा
संशोधिता ।



काश्यां

ई. जे. लाजरसकम्पन्याख्येन स्वमुद्रालये मुद्रिता ।

संवत् १९५४ ।

॥ श्रीः ॥

# भूमिका ।

अथेयं प्रकाश्यते न्यायवार्तिकतात्पर्यटीका मुद्रयित्वा । अस्याः किल रचयिता विश्वविख्यातवैदुषीविभवः श्रीमान् वाचस्पतिमिश्रः । अयं सर्वेषु दर्शनेषु निबन्धान् प्रणेतुमुद्यतो न्यायदर्शनस्य सर्वदर्शनोपयोगितामाकलयन् वात्स्यायनमुनिप्रणीतं गौतमसूत्राणां भाष्यं दिङ्नागप्रभृतिभिर्नास्तिकैर्दूषितमुद्दिधीर्षुणोद्द्योतकरेण निर्मिते न्यायवार्तिके पुनरपरैर्नास्तिकैर्दूषिते तदुद्धारायेमं निबन्धमरचयदिति 'यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद । कुतार्किकाज्ञाननिवृत्तिहेतुर्विधीयते तस्य मया निबन्धः' इति वार्तिकारम्भश्लोकेन कुतार्किकैर्दिङ्नागप्रभृतिभिरिति तद्व्याख्यानेन 'इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् । उद्द्योतकरगवीनामतिजरतीनां समुद्धरणादिति टीकाकृदुक्त्या चावगम्यते । अयं च श्रीवाचस्पतिमिश्रः श्रीमदुदयनाचार्यादतिप्राचीन इति शक्यमवगन्तुमुदयनाचार्यकृततात्पर्यपरिशुद्धिनामके तात्पर्यटीकाव्याख्याने व्याख्येयनिबन्धादरातिशयशंसिना 'मातः सरस्वति पुनः पुनरेष नत्वा बद्धाञ्जलिः किमपि विज्ञपयाम्यवेहि । वाक्चेतसोर्मम तथा भव सावधाना वाचस्पतेर्वचसि न स्खलतो यथैते ॥' इति सरस्वतीं प्रति तत्प्रार्थनेन ।

> तर्काम्बराङ्क९०६प्रमितेष्वतीतेषु शकान्ततः ।
> वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥

इति श्लोको लक्षणावल्या अन्ते दृश्यते तेनोदयनाचार्यस्थितिशककालः ९०६ इति लभ्यते । ततः पूर्वं वाचस्पतिमिश्रो वैक्रम ८९८ वत्सरे न्यायसूचीनिबन्धमकरोदिति तदीयेन ।

> न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे ।
> श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे ॥

इति श्लोकेनावगम्यते । तेनोदयनाचार्यकालाद् १४३ वर्षेभ्यः पूर्वं श्रीवाचस्पतिमिश्र आसीदिति प्रतीयते । न्यायभाष्यदूषणपरः प्रमाणसमुच्चयनामा ग्रन्थो दिङ्नागेन निर्मित इति श्रूयते न त्वद्याप्यन्विष्यमाणो ऽप्युपलब्धः । वार्तिकदूषणपरस्तु किंनामकः केन कृतो निबन्ध इति नाद्याप्यवधृतम् । तामिमां न्यायवार्तिकतात्पर्यटीकां साङ्ख्यतत्त्वकौमुदीं न्यायतात्पर्यटीकायामुपपादितमस्माभिरिति लेखं पश्यद्भिर्दर्शनरसिकैरन्विष्यमाणामप्यनुपलभ्यमानां मनीषिमनः खेदयन्तीं विविधदर्शनानुरागवता काशिकराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षेण श्रीमदार्थरवेनिसाह्वयमहोदयेन कलिकातास्थपुस्तकालयात्प्रथमतृतीयचतुर्थपञ्चमाध्यायानत्यन्तमशुद्धान् सं. १६०३ वत्सरे लिखितान् अचत्यपुस्तकालयस्थं च खण्डितं शुद्धप्रायं लेखकालप्रदर्शनविकलं पुस्तकं महिसुरनगराद् द्वितीयतृतीयचतुर्थाध्यायान् सं. १५५८ संवत्सरे लिखितान् ददता संपादितसमस्तपुस्तको वाराणसीनिवासिना विविधसंस्कृतपुस्तकसंपादनरसिकेन श्रीगोविन्ददासगुप्तमहोदयेन दत्तमशोधितं संपूर्णप्रायं नवीनं पुस्तकमाद्यपुस्तकस्थानउपयोज्य प्रदर्शितपुस्तकेभ्यः पाठभेदाननुपयुक्तान् प्रदर्शयन् सूत्राणि स्थूलतमाक्षरैर्भाष्यवार्तिकभागान् स्थूलाक्षरैष्टीकां सूक्ष्माक्षरैष्टिप्पणीं च सूक्ष्मतमाक्षरैर्निवेशयन् यथामति संशोध्य प्रकाशयन् संभावये दर्शनरसिकमनस्तोषकारिणीम् । अस्यां च मदीयमतेरपाटवेन सीसकाक्षरयोजकदोषेण चोपनता अशुद्धीः क्षाम्यन्तो गुणैकदृष्टयो महाशया आस्वादयन्तु प्राचीनतमदर्शनालोचनसमुत्थं प्रमोदं प्रसीदतु चानेन प्रयासेन भगवान् सर्वान्तर्यामी श्रीकाशीविश्वेश्वर इति शुभम् ॥

संवत् १९५४ फा. शु १ सोमे । { महामहोपाध्यायो गङ्गाधरशास्त्री ।



॥ श्रीः ॥

# न्यायवार्तिकतात्पर्यटीकायाः सूचीपत्रम् ।

## अ.

## सूचीपत्रम् ।

## न्यायवार्त्तिकतात्पर्यटीकायां दृष्टानां ग्रन्थान्तर-वाक्यानामुपलब्धस्थलानां सूचीपत्रम् ।

६ २३ को हि योगप्रभावादृते०
योगभा पा ४ सू १०

२२ १ तदभिसंधिपूर्वकम्
महाभा० अ ३ पा १ सू ३६

५० ४ क्षीयन्ते चास्य कर्माणि
मुण्डकोपनिषत् ख २ म ८

५१ २२ स्वल्पाक्षरमसंदिग्धम्
पराशरोपपुराण अ १८

५८ २७ पूर्वोत्पन्नमनोयस्थम०
तन्त्रवा अ ३ पा ३ सू २

८१ २७ यागाद्यभिप्रेतविषय०
प्रशस्तपादभा गुणलक्षणे

८३ ६ न सोऽस्ति प्रत्ययो लोके०
वाक्यपदीये का १ श्लो १२४

८३ १२ आद्यः करणविन्यास०
वाक्यपदीये का १ श्लो १२३

८७ ७ प्रत्यक्षाद्यभिचारेण
श्लोकवार्तिक अनुमानपन्थे

८७ २७ नैष स्थाणुरपराधो०
निरुक्त अ १ खण्ड १६

८९ ६ निर्विकल्पकबोधेन निरुक्ते
श्लोकवा प १७

९४ २२ आत्मन्येव स्थितं ज्ञाने
श्लोकवा प १७-६

१०० ६ नियमस्तद्विरोधाच्च
श्लोकवा अनुमानपन्थे प ४०

१०८ १५ विद्यानुगममात्रं च
श्लोकवा प १८

११७ ३४ स एव चोभयात्माय
श्लोकवार्तिके अनुमाने २४

१२९ ७ यस्योभयं हविरार्तिं
तै ब्रा अ ३ प्र ६ अ १ ८ ७

१९० २२ वायुरापद्यते शब्दताम्
वाक्यपदीये का १ श्लो १०९

९६ २३ यास्यफलं प्रयोक्तरि
जै सू अ ३ पा ७ सू १८

९७ १९ यदेव विद्यया करोति
छान्दोग्य प्र १ ख १ । १०

४०८ १८ तच्चैव तत्र कारणं
सांख्यभाष्ये सू ५

४१७ ८ सदेव सोम्येदमग्र आसीत्
छान्दोग्य प्र ६ ख २ । १

४१७ १६ यस्मिंस्तत्त्वं न विहन्यते
महाभाष्य अ १ पा १ आ १

४१७ २० तदैक्षत बहु स्यां प्रजायेय
छान्दोग्य प्र ६ । २ । ३

४२० ४ अपाणिपादो
श्वेताश्वतरोपनिषत् ३ । १९

४२५ ८ एतस्य वा अक्षरस्य
बृहदारण्यक अ १ । ८१

४२६ २ अज्ञो जन्तुरनीशोऽयं
भारतवनप अ ३० श्लो २८

४३० २ अन्यायश्चानेकार्थत्वम
शाबरभा अ २ पा १ सू १२

४३४ ५ एकमेवाद्वितीय
छान्दोग्योपनिषत् ६ । २ । १

४३५ ५ मृत्योः स मृत्युमाप्नोति
बृहदा ४ । ४ । १९ । क ४ । १०

४३६ ६ निर्विशेषं न सामान्यं
श्लोकवा आकृत्यधिकरण १०

४३७ ६ प्रमाणान्यदृष्टानि
तन्त्रवार्तिके अ २ पा १ पृ ३७४

४४१ १ न हि मृगाः सन्ति
महाभाष्य अ १ पा १ सू ४०

४४२ २२ ऋणानि त्रीण्यपाकृत्य
मनुस्मृति अ ६ श्लो ३५

४४५ २ ऐकाश्रम्यं त्वाचार्याः
गौतमस्मृति

४४७ ३ वेदोऽखिलो धर्ममूलम
मनुस्मृति अ २ श्लो ६

४४९ ७ पुरुषश्च कर्मार्थत्वात्
जै सू अ ३ पा १ सू ६

४५८ ८ असर्वगतद्रव्यपरिमाणं मूर्तिः
प्रशस्तपादभा कर्मग्रन्थ पृ ३०८

५०४ २६ अस्त्यात्मक्षतिर्यदा बाल
वाक्यपदीय का १ श्लो १५३

# न्यायवार्त्तिकतात्पर्यटीकायां धृतानां ग्रन्थान्तरवाक्याना-मनुपलब्धस्थलानां सूचीपत्रम्।

२८ १२ एको भावस्तत्त्वतो येन दृष्टः
३८ १३ सर्वोऽयमनुमानानुमेयव्यवहारो
४२ १४ मीमांसासक्तकस्तर्कः
४२ १८ धर्मे प्रमीयमाणे हि
५० ७ नाभुक्तं क्षीयते कर्म
५१ २४ सूत्राणि सूचितार्थानि
५१ ११ सुखी भवेत् दुःखी वा
५५ ७ [illegible]
५७ ६ येषामपि विपरीतख्यातिः
५६ ४ गृहीत्वापि गतान्धीरा
६० २७ लिङ्गद्रुप्यभूतार्थं
८४ १६ वस्तुद्वास्तरणा
८६ २८ यस्यापि नानोपाधेः
६० ६ पर्यायेणापि पुनः
६० १६ तेन स्यादवधापाये
६० १८ विशेषणं विशेष्यं च
६१ ११ देवदत्तादिशब्देन
६१ १४ सत्त्वादि सार्वभाव्या हि
६४ २६ करणं चेन्द्रिय
६७ १ न सुखादिप्रमेयं वा *
६७ २८ प्रतिषेधादुपात्त चेत् *
६८ १३ शब्दजत्वेन शाब्दं चेत्
१०१ १४ भिन्नकालं कथं ग्राह्य
१०२ १० प्रत्यक्षं कल्पनापोढं
१०४ १० यस्य येनाभिसम्बन्धो
१०६ १३ कार्यकारणभावाद्वा
१०७ ८ नित्यं सत्त्वमसत्त्वं वा
१०७ २४ एकसामग्र्यधीनस्य
१०६ २१ मात्रानिमित्तयोगो
१२० १२ केचिद्धर्मान्तरं मेय *
१२० १६ लिङ्गस्याव्यभिचारस्तु *
१४६ २७ नर्तकीभ्रूलतावेद
१७५ १ अन्योऽसाधारणो धर्मः
१७५ ५ सर्वतोऽस्य निवृत्तत्वात्
१६५ ६ सपक्षाव्यतिरेकी चेत्
१६८ १ सपक्षे सदसन्द्वेधा *
१६८ ३ सच्च च सन् सजातीये *
१६८ १० नित्यानित्यप्रयोगत्व *
१६८ १४ साध्यधर्मो मतो हेतु *
२२० १३ यक्षे येष्वपु विन्देत
२२१ ८ अस्मदावर्ते शब्दप्रयोगे
३८४ ११ न तस्य किञ्चिद्भवति
४३५ १० अन्योन्यसंश्रयाक्षेदः
४३७ ५ पुत्रसिद्धार्थं
४५२ १२ स्थानाद्बीजादुपष्टम्भा
४६५ २० सामान्यार्थेन विज्ञाने
४६८ १२ सुखकर्मविपाकोऽथवा
४८६ १ साध्येनानुगमात् *
४६६ १६ कीर्तिना किमिदानीम् *
४६६ १६ पक्षप्रतिषेधे *
५०३ २७ अत्रापि न कश्चित्
५११ ४ श्रुतिस्मृत्यविरोधे

* पुष्पाङ्कितानि वाक्यानि बौद्धग्रन्थस्थानि तेषामनुपलब्ध्या त्वत्र नान्वेषितानि।

४०५ पृ २२ पङ्क्तौ शास्त्रे कृत्स्नासदिवादरभूतद्दिवेदित्यर्थसंग्रहो यथाकथं चित् क्रियतइति दृश्यते परन्तु कुत्रेदं शास्त्रं कस्य तस्यार्थं इति नावधृतम् । उदयनाचार्यकृततात्पर्यपरिशुद्धावपि तस्य नार्थो विवृतो न च ग्रन्थस्थल प्रदर्शितम् । पाठभेदाश्चात्र नानाविधा दृश्यन्ते । कलिकातापुस्तके कृत्स्नासद्दिवादरभ्रादिति पाठः । श्रीविशुद्धानन्दसरस्वतीस्वामिवरपुस्तके कृत्स्नासदिवादरभूतद्दिवेति । काशीसंस्कृतपाठशालापुस्तके कृत्स्नासदिवादरभूतद्दिवेति । एव स्थिते महामहोपाध्यायसुधाकरपण्डिता ज्योतिषशास्त्रे चतुर्दशी रविवासरे विरुद्धेत्युक्त तदनुसारेण कृत्या सदिवाकरभूतद्दिवो । पाठः । कृत्या वानिकेत्यर्थः । सूर्ये विशाखा भरणी ज्येष्ठा मेघा मघा तथा । चतुर्दशी द्वादशी च विरुद्धा सप्तमी तथेति शीघ्रबोधे दर्शनादित्याहुः ।

महामहोपाध्यायशिवकुमारमिश्राः कृत्स्नासद्दिवादरभूतद्दिवेति पाठमभिप्रयन्ति । व्याचक्षते च विज्ञानमात्रसत्त्वस्थापनाप्रस्तावे कथ विज्ञानमात्रस्य सत्त्वं बाह्यार्थस्य चासत्त्वं भवतोपपाद्यतइत्यनुयुक्तो विज्ञानमात्रसत्त्ववादी संक्षेपतो दृष्टान्तद्वयेन सिद्धान्तद्वयोपपादनप्रकारं स्वकीय दर्शयति । कृत्स्नेत्यादिना । अत्र कृत्स्नासत् इव आदरभूतत् इवेति च्छेदः । अयमर्थः । अहम् बाह्यार्थाऽसत्त्वोपपादने कृत्स्नासत् इव अस्मि कृत्स्नम् असत् यस्य स कृत्स्नासत् शून्यवादी स इवेत्यर्थः । यथा शून्यवादिना सर्वोऽसत्त्वमुपपाद्यते प्रातीतिकत्वमुपपादयता तथैवाऽहं बाह्यासत्त्वमुपपादयामीति यावत् । विज्ञानसत्त्वोपपादने तु आदरभूतत् इव भवामि आदरभूः स्वीकारविषयःतत् कृत्स्नम् यस्य स आदरभूतत् सर्वसत्त्ववादी नैयायिक इत्यर्थः। यथा नैयायिकेन बाह्यान्तरोभयसत्त्वमुपपाद्यते ऽनुभवबलमालम्ब्य तथैव मया विज्ञानसत्त्वमुपपाद्यतइत्याशय इति ।

श्रीविशुद्धानन्दसरस्वतीस्वामिवर्या अस्याः पङ्क्तेरयमर्थः (कथा; कर्तरि) कर्तरि नासदिव नासदेव नादर अभूत् तदिव नाम तदेव इत्या नादर अभूत् यथा कथ चिदर्थसंग्रहः क्रियते नाम वादिप्रतिवादिभ्यामुक्तार्थे व्याख्यायते तथा वादादिषु नाम कथासु तथार्थसंग्रहो न क्रियते पक्षप्रतिपक्षग्र यकैर्वादिप्रतिवादिनोः परीक्षणान्नाम परीक्षय परीक्षितस्य शास्त्राभिमन्य शास्त्रितत्वान्नाम कथास्वधिकारात् । इति व्याचक्षाणाः कर्तरि नासदिवादरो ऽभूतदिवेति पाठ युक्तं मन्यन्ते ।

अनिरीक्ष्येतद्वाक्यपर्यालयग्रन्थसन्दर्भे न निर्धारयाम्यस्य वाक्यस्य वा तात्पर्यं चेति सशोधक. ।

# न्यायवार्तिकतात्पर्यटीकायाः शुद्धिपत्रम् ।

| पृ | पं | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ३ | २१ | काय | कार्यं |
| ५ | ३ | भिधत्त | भिधत्ते |
| ७ | २५ | र्धस्यत्र | र्धत्वत्व |
| ८ | १३ | प्रवृत्तः | प्रवृत्तेः |
| १२ | ५ | सत्रकस्या | सर्वेकस्या |
| २० | १६ | माप | र्माप |
| २७ | १६ } २६ } | प्रवृत्त | प्रवृत्ते |
| २८ | ३ | तु साधन | तु खसाधन |
| ३३ | ६ | स्पुन | स्पुनर्न |
| ३६ | २४ | क्रियाश्रय | क्रियाश्रयाः |
| ४० | १२ | तत्राप्र | तत्र |
| ४३ | २० | फलात्वमिति | फलमिति |
| ४७ | १५ | ननु | न तु |
| ४८ | ११ | नि येवशे भेदे | नि येवशभेदे |
| ४६ | १७ | पकरो | पकारो |
| ५० | ७ | यत | नियत |
| ५१ | २० | भावाद् | भाव |
| ६८ | १८ | अनुमानान्तर | अनुमानानन्तर |
| ७८ | ५ | यर्था अनु भवन्ति | यर्थानुभवन्ति । |
| ८७ | ६ | भाव्यं | भाव्यं |
| ९५ | २१ | त्यर्थं | त्यर्थं |
| ,, | २५ | तुपलब्धे | तुपलब्धेः |
| ९६ | ६ | मन्यथा | मन्यथ |
| ९९ | २८ | कस्येद | कस्येद |
| १०१ | ६ | वर्तमाना | वर्तमानाभ |
| ,, | १६ | मग्रा | मग्रे |
| १०४ | १७ | लक्षार्थेन | लक्षणार्थेन |
| ,, | १८ | वदत | वदेत |
| ११२ | २७ | मुपपत्तिष्ठते | मुपतिष्ठते |
| ,, | २८ | पारमर्थ | परामर्थ |
| ११७ | १० | परिहृति | परिहरति |
| ११८ | १३ | पभ्यते | पलभ्यस्थे |
| १२१ | १ | सर्यत | पर्यंत |
| १२४ | ११ | क्रियत | किमित |
| १२६ | ५ | दर्शनेन | दर्शने न |
| १३२ | ८ | माधर्म्ये च | माधर्म्येच |
| १३३ | ८ | दस्येसठता | दस्येसता |
| १३४ | २० | धर्मिणा | धर्मे मा |
| १३६ | ६ | धर्मिं | धर्मि |

| पृ० | पं | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १४० | ५ | द्वैविध्य साध | द्वैविध्यसाध |
| १४६ | २ | लक्षणामिति | लक्षणामिति |
| १५२ | २६ | र्थता | र्थेदा |
| १५४ | २० | चनेन | चने न |
| १५६ | २७ | प्रत्यश्च | प्रत्ययश्च |
| १६७ | ८ | तुलब्धौ | तुपलब्धौ |
| १७२ | ७ | धारधर्मा | धारणाधर्मा |
| १७६ | २२ | अन्तरस्य | शान्तरस्य |
| १७८ | २६ | विजातीय | विजातीयत्व |
| १७६ | १ | नामार्थ | नानार्थ |
| १८६ | १ | साधम्य | साधर्म्यं |
| १६७ | ५ | पदैदेक | पदैकदे |
| २०० | ६ | भिधास च | भिधास२० |
| २०१ | २ | धिकपर्य | धिकरणर्थ |
| २०३ | २५ | प्रयोजनानन्तरं | प्रयोजनान्तरं |
| २०४ | १७ | कर्मणो भावं | कर्मणो भावं |
| ,, | १८ | फले न | फलेन |
| २३१ | ८ | कस्मि न्विषये | कस्मिन्विषये |
| २३५ | ४ | विवक्षितत्वाद् | विवक्षितत्वा |
| २३६ | १६ | धानयत | धानवन्तः |
| २३६ | २१ | कालतीत | कालातीत |
| २४० | ४ | सकाला | स काला |
| २४१ | २४ | सहकारि | सहकारी |
| २४२ | ८ | साधन | साधने |
| २४८ | ५ | धारा | धारणा |
| ,, | १६ | परिचित | परीचित |
| २५१ | १४ | पक्षगै | पक्षगैः |
| ,, | २३ | नेति | येति * |
| २५३ | ७ | महत्व | महत्वे |
| २५८ | १२ | अर्थेन्द्रिय | अर्थेन्द्रिय |
| २६२ | ४ | सर्वे | सर्वत्रौ |
| २६२ | १२ | र्योमरव्या | र्योपलब्धा |
| २६८ | ३ | स्वभाव हेतुः | स्वभावहेतुः |
| २६८ | १ | वर्तत | वर्तेत |
| २८० | ६ | भाव | भाव |
| २८० | ११ | प्रयप | प्रयत्न |
| २८४ | ३ | पूर्णयरो | पूर्वापरो |
| २८४ | २२ | क्वाचित्कत्व | क्वचित्कत्व |
| २८८ | ११ | पलब्धनाया | पलब्धनाया |
| २९५ | २२ | दयति | दर्शति |

श्रीगणेशाय नमः ।

# न्यायवार्त्तिकतात्पर्य्यटीका ।

विश्वव्यापी विश्वशक्तिः पिनाकी विश्वेशानो विश्वकृद्विश्वमूर्त्तिः ।
विश्वत्राता विश्वसंहारकारी विश्वाराध्यो राधयत्वीहितं नः ॥ १ ॥

नमामि धर्मविज्ञानवैराग्यैश्वर्य्यशालिने ।
निधये वाग्विशुद्धीनामक्षपादाय तायिने ॥ २ ॥

ग्रन्थव्याख्यानच्छलेनैव निरस्ताखिलदूषणा ।
न्यायवार्त्तिकतात्पर्य्यटीका ऽस्माभिर्विधास्यते ॥ ३ ॥

इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्द्योतकरगवीनामतिजरतीनां समुद्धरणात् ॥ ४ ॥

अथ भगवता ऽक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते व्युत्पादिते च भगवता पक्षिलस्वामिना किमपरमवशिष्यते यदर्थं वार्त्तिकारम्भ इति शङ्कां निराचिकीर्षुः सूत्रकारोक्तप्रयोजनानुवादपूर्वकं वार्त्तिकारम्भप्रयोजनं दर्शयति ।

यदक्षपाद इति । यद्यपि भाष्यकृता कृतव्युत्पादनमेतत्तथा ऽपि दिङ्नागप्रभृतिभिरर्वाचीनैः कुहेतुसन्तमससमुत्थापनेनाच्छादितं शास्त्रं न तत्त्वनिर्णयाय पर्य्याप्तमित्युद्द्योतकरेण स्वनिबन्धोद्द्योतेन तदपनीयते इति प्रयोजनवानयमारम्भ इति । सूत्रोक्तप्रयोजनानुवादः प्रयोजनवत्ताप्रख्यात्या-

पर्य्यविधाः पाप्मानो विलीयन्त इति। न चास्मदादीनां मन्दतपसामयं प्रसङ्गः। न हि गजानामुदर्य्यं तेजो घटकाष्ठमपि पचतीत्यस्मदादीनामप्युदर्य्यं
। ३ तेजसा तथा भवितव्यम्। कुताकिकेति दुरागममतिभिराहितमज्ञानं कुतार्किकाज्ञानमिति। अविगीतशिष्टाचारपरम्पराप्राप्तः परमास्तिकेन वार्त्तिककृता कृतो ऽभीष्टदेवतानमस्कारो ग्रन्थे न निवेशितः न खल्वन्यदपि मङ्गलं ग्रन्थे निवेशितम्। प्रसिद्धतरतया मङ्गलान्तरवच्छिष्या अवगमिष्यन्तीति सर्वमवदातम्।

तत्र सङ्क्षेपतः प्रथमसूत्रमनूद्य तस्य तात्पर्य्यमाह **प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इत्येतच्छास्त्रस्यादिसूत्रं तस्य** शास्त्रस्याभिसम्बन्धवाक्यम्। आदिपदेन क्रमप्राप्तस्यैव प्रथमं व्याख्यानं युक्तं न द्वितीयादेरिति दर्शितम्। अभिमतसम्बन्धो ऽभिसम्बन्धः। शास्त्रनिःश्रेयसयोर्हेतुहेतुमद्भावः तस्येदं सूत्रं वाक्यमभिसम्बन्धवाक्यम्। प्रमाणादिपदार्थतत्त्वज्ञानादित्यत्र हि तत्त्वं ज्ञायते ऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रमुच्यते। पञ्चम्या च तस्य हेतुत्वम्। न हि विपर्य्यस्तत्त्वाभिधायकस्वरूपमात्रेण तदर्थविवक्षितार्थे निःश्रेयसहेतुरिति। पदार्थतत्त्वावगमकरणतया शास्त्रमुपदिशति न तु स्वरूपेण। तेन शास्त्रस्य निःश्रेयसे कर्त्तव्ये प्रमाणादितत्त्वावगमो ऽवान्तरव्यापार इत्युक्तं भवति। तथा च प्रमाणादिपदार्थतत्त्वं प्रतिपाद्यं प्रतिपादकं च शास्त्रमिति शास्त्रप्रमाणादिपदार्थतत्त्वयोः प्रतिपाद्यप्रतिपादकभावः प्रमाणादिपदार्थतत्त्वज्ञाननिःश्रेयसयोः कार्य्यकारणभावलक्षणः सम्बन्धः सूचितो भवति। तदिदमभिधेयसम्बन्धप्रयोजनप्रतिपादनार्थं प्रथमसूत्रस्य। यत्पदार्थतत्त्वज्ञानस्य च यथा निःश्रेयसाधिगमं प्रत्युपयोगस्तथा ऽपि निवेदयिष्यते। विनिश्चितप्रभावस्य मुनेराप्तत्वेन तद्वाक्यात्प्रयोजनादि विनिश्चित्य प्रवर्त्तेरन्निति। आप्तत्वानिश्चये त्वर्थसन्देहात्। न खलु कृष्यादावपि निश्चितफलाधिगमानां प्रवृत्तिः। अन्यथा ऽप्यन्नादिना प्रतिबन्धेन फलानुत्पादस्यापि सम्भवात्। न च प्रयोजनादिसंशयाभावे ऽपि संशयस्य साधकबाधकप्रमाणाभावेन न्यायप्राप्तत्वेन तदभिधानमनर्थकमिति वाच्यं विशेषस्मृत्यनपेक्षस्य संशयस्यानुत्पादात्। वाक्यात्तु विशेषस्मृतिरिति नानर्थकत्वम्।

तदेवं प्रथमसूत्रतात्पर्यमुक्त्वा भाष्यस्यादिवाक्यतात्पर्यमाह **प्रमाण-
तोऽर्थप्रतिपत्तावित्यादि तस्यानुसंधानवाक्यम् ।** तस्य शास्त्रस्य निः- १
श्रेयसाधिगमेन सह सूत्रेण घटितस्य कुतश्चिन्निमित्ताद्विघटनाशङ्कायाम् अनुसूत्र-
घटनायां. पश्चात्संधानं घटनम् अनुसंधानं तस्य वाक्यमनुसंधानवाक्यमिति ।

एवं किलात्र शङ्क्यते । यदशक्यानुष्ठानोपायोपदेशकं तदनर्थकं यथा
ज्वरहरतक्षकचूडारत्नाहरणोपदेशकं वाक्यं तादृशं चेदं शास्त्रमिति । तथा
हि प्रमेयादीनां तावत्पदार्थानां तत्त्वज्ञानं प्रमाणतत्त्वज्ञानाधीनम् । न हि
प्रमाणं तत्त्वेनानवधारितं बोधकत्वमात्रेण स्वगोचरावधारणायालम् । ताव-
न्मात्रस्य तदाभाससाधारण्यात् । अपि तु बोधकत्वैकार्थसमवेतेनाव्यभिचा-
रित्वेन । तदेव हि प्रामाण्यं तत्त्वाशक्यावधारणम् । तदनवधारणाच्च
प्रमेयादयो दुरवधारणाः । तथा हि विज्ञानस्य तावत्प्रामाण्यं स्वतो वा
निश्चीयते परतो वा । न तावत्पूर्वः कल्पः । न खलु विज्ञानमनात्मसंवेद-
नमात्मानमपि गृह्णाति प्रागेव तत्प्रामाण्यम् । नापि विज्ञानान्तरम् । तद्विज्ञान-
मित्येव गृह्णीयान्न पुनरस्याव्यभिचारित्वम् । ज्ञानत्वमात्रं च तदाभाससाधा-
रणमिति न स्वतः प्रामाण्यावधारणम् । एतेन स्वसंवेदननयेऽप्यव्यभिचारग्र-
हणं प्रत्युक्तम् । नापि परतः । परं हि तद्गोचरं वा ज्ञानमभ्युपेयेत अर्थक्रि-
यानिर्भासं वा ज्ञानान्तरं तद्गोचरनान्तरीयकार्थान्तरदर्शनं वा । तन्न सर्वं
स्वतोऽनवधारितप्रामाण्यमाकुलं सत्कथं पूर्वं प्रवर्तकं ज्ञानमनाकुलयेत् । स्वतो
वाऽस्य प्रामाण्ये किमपराद्धं प्रवर्तकज्ञानेन येन तस्मिन्नपि तन्न स्यात् । न
च प्रामाण्यं ज्ञायते स्वत इत्यावेदितम् । यदा च संवेदनप्रामाण्यमुक्तेन
क्रमेण दुरधिगमं तदा कैव कथेन्द्रियादीनामव्यभिचारिसंवेदनकार्यव्य-
ङ्ग्यप्रमाणभावानाम् । तदेवं दृष्टार्थाः प्राणभृद्व्यवहारा भवन्तु संदेहादपि यथा
तथा अदृष्टार्थास्तु बहुवित्तव्ययायाससाध्या वैदिका व्यवहारा दत्तजलाञ्ज-
लयः प्रसक्ताः तस्मात्प्रमाणादिपदार्थतत्त्वज्ञानद्वारेण न शास्त्रं निःश्रेयसेन
संबध्यते इति सेयमाशङ्का प्रामाण्यज्ञानोपायकथनेन भाष्यकृता निराकृता ।
तथा हि । प्रमाणत । अर्थवदिति । नित्ययोगे मतुप् । नित्यता चाव्यभिचारि- भा.
ता । तेनार्थाव्यभिचारीत्यर्थः । इयमेव चार्थाव्यभिचारिता प्रमाणस्य यद्देशका-
लान्तरावस्थान्तराविसंवादोऽर्थस्वरूपप्रकारयोरुपदर्शितयोः । अत्र हेतुः

१ **प्रवृत्तिसामर्थ्यात्** । समर्थप्रवृत्तिजनकत्वात् । यदि पुनरेतदर्थवन्नाभविष्यन्न समर्थां प्रवृत्तिमकारिष्यद् यथा प्रमाणाभास इति व्यतिरेकी हेतुः । अन्वयव्यतिरेकी वा । अनुमानस्य स्वतः प्रमाणतया ऽन्वयस्यापि सम्भवात् । प्रवृत्तिजनकत्वं तु प्रमाणस्य न साक्षात् किं त्वर्थप्रतिपत्तिजननद्वारेणेत्याह **प्रमा-**
२ **णतो ऽर्थप्रतिपत्ताविति** । सर्वस्य चास्योपपत्तिं वार्त्तिकव्याख्यानावसरे निवेदयिष्यामः ।

स्यादेतत् । भवन्तु प्रमाणादयः शक्यज्ञानाः शास्त्रेण तु ते नाभिधीयन्त इति न निःश्रेयसेन सङ्गतिः शास्त्रस्येत्यत आह । **शास्त्रस्य**
१० **पुरुषश्रेयोऽभिधायकत्वात्** । यद्यपि श्रेयो दुःखनिवृत्तिरात्यन्तिकी वक्ष्यति तथा ऽपि सोपायैव सा ऽत्र श्रेयःशब्देन विवक्षिता तन्मात्रस्य शास्त्राविषयत्वात् । तदयमर्थः । शास्त्रं तावदेतत् पुरुषश्रेयो ऽभिधत्ते सहोपायेनेत्युभयसिद्धं तदशक्यानुष्ठानतया ऽपवदितव्यम् । सा चेदशक्यानुष्ठानता ऽपनीता प्रमाणत इत्यादिना सहितं निःश्रेयसेन सह शास्त्रमिति । शास्त्रस्येत्यादिग्रहणकवाक्यं विवृणोति **शास्त्रं पुनरित्यादिना** पञ्चमीगर्भप्रत्ययान्तेन । प्रमाणादिवाचकपदग्रहणेन तल्लक्षणानि तत्परीक्षाश्चोपलक्षयति तथा च **पञ्चाध्यायी शास्त्रमित्युक्तमित्यविरोधः** । पञ्चाध्यायीत्यनेन व्यूहः समूहिनामुचितानुपूर्वी । उपलक्षकपदस्वरूपमाह । **पदं पुनरिति** । एकस्मृतिसमारूढा वर्णा एकार्थप्रतिपादनावच्छिन्नाः समूहः । एवं स्वार्थस्मृत्यवान्तरव्यापाराणां सूत्रपदानां नानापदार्थविशिष्टैकार्थप्रत्ययैककार्यावच्छिन्नानां समूहो वेदितव्यः । एवं क्व चित्केन चिदर्थेनैकेन सूत्रवाक्यानामेकवाक्यत्वे समूहः प्रकरणम् । प्रकरणानामपि कया चित्स्वार्थसङ्गत्या समूह आह्निकम् । एवं तत्र तत्र वेदितव्यम् । एताः प्रकरणाह्निकाध्यायार्थसङ्गतीस्तत्र तत्र लेशतो दर्शयिष्यामः ।

तदेवं शास्त्रस्वरूपं दर्शयित्वा नान्तरेण तदर्थकथनं पुरुषश्रे-
१ योऽभिधायकत्वमस्य सिद्ध्यतीति तदर्थं कथयति **तत्पदार्था इति** । ननु प्रमाणादीनां प्रतिनरमानन्त्येन दुर्ज्ञानत्वमिति तदवस्थमेवानर्थकत्वं शास्त्रस्य प्रसक्तमित्यत आह **षोडशात्मानः** । आत्मा स्वभावः प्रमाणादीनां प्रमाणत्वादिसामान्यविशेष इति यावत् । एतदुक्तं भवति । अन्तर्गणितभेदानन्त्ये

ऽपि सामान्यविशेषैः सङ्गृहीता न दुर्ज्ञाना इति यतोऽस्य पदार्थाः प्रमाणाद-
यस्तस्माच्छास्त्रं पुरुषश्रेयो ऽभिधत्ते ।

स्यादेतत् । प्रमाणादयः पदार्थाः प्रामाणिका अप्रामाणिका वा । अप्रामाणिकत्वे कल्पनामात्रनिर्मिताः कथं निःश्रेयसाय कल्पन्त इति । न च षोडशात्मानः कल्पनाः कोपस्यानन्तप्रसरत्वात् । प्रामाणिकत्वे वा प्रमाणादेव तत्सिद्धेः शास्त्रस्य वैयर्थ्यमित्यत आह प्रत्यक्षेति । २ प्रत्यक्षानुमानाधिगतत्वदर्शनेनाप्रामाणिकत्वं निषिद्धम् । अत एव वस्तुतत्त्वमिति । प्रमाणादयः पदार्था नोपमानविषया इति नोपमानमुपन्यस्तम् । यद्यपि प्रमेयमात्माद्यपवर्गान्तलक्षणमागमिकं तथाऽप्यागमस्याप्रणेतृकतया तथापि मूलभूतमनुमानं प्रत्यक्षं चास्तीति प्रत्यक्षानुमाने एव दर्शिते । ननूक्तं प्रामाणिकत्वे शास्त्रवैयर्थ्यमित्यत आह तस्य विषया इति । व्यवहारमात्रे प्रमाणैर्लौकिका वैनयिकबुद्धिविरहिणो नैतान्पदार्थान्विविञ्चते अविविक्ताश्चैते न निःश्रेयसाय कल्पन्त इत्यनधिगमे युक्तम् । आध्यात्मिकी शक्तिः शुश्रूषादिः । पुरुषेत्युक्तं तच्च विशेषितं पुरुषविशेषं ग्रहीतुं संभावितः पुरुषान्दर्शयति पुरुषः पुनरिति । हेयं दर्शयति तत्रेति । उपादेयानाह इतर इति । अपेक्षा जिज्ञासा । सा संदिग्धस्य तावदस्ति शिष्यस्य । विप्रतिपन्नस्य तु साक्षिणां पुरतो जल्पवितण्डाभ्यां जीयमानस्य गलिते ऽहंकारे संदिग्धस्य जातजिज्ञासस्य सापेक्षस्य सतः । अप्रतिपन्नस्यापि केन चित्प्रकारेण संदेहमापाद्य सापेक्षीकृतस्य प्रतिपाद्यता । तदिदमुक्तमितरे सापेक्षाः सन्तः प्रतिपाद्या इति । असंदिग्धो ऽपि तत्त्वप्रतिपादनाय कारुणिकेन संदिग्धः कृत्वा प्रतिपाद्य इति । तत्किं सापेक्षमधिकृत्य शास्त्रं प्रवृत्तं तथा च प्रमाणानां न प्रमाणान्तरे प्रवृत्तिः स्यादित्यत आह । ते यदेति । कं विशिष्टपर्व जिज्ञासमथो यदेन्द्रियार्थापेक्षास्ते तदा प्रत्यक्षेण प्रतिपाद्याः । एवमुत्तरमपि योज्यम् । अपमर्षविधिः । न दृष्टयोरन्नपानयोर्जिज्ञासेहापेक्षा विवक्षिता किं तु निःश्रेयसोपयोगिपदार्थजिज्ञासा । सा चास्मिन्नेव शास्त्रे प्रवृत्तिहेतुर्नान्यत्र तदिदमुक्तं यदा पुनरिति । परमपुरुषार्थसाधने तु जिज्ञासव इति शेषः । ब्रह्मविमर्शे श्रेयो निःश्रेयसमिति श्रेयोमात्रप्रकाशनात् । श्रेयः पुनः सुखप्राप्तिर्निवृत्तिश्च । २ तत्प्रधानात्प्रकाशनात् । तच्छ्रेयः सुखं दुःखनिवृत्तिश्च विद्यमानं

द्वेधा व्यवतिष्ठते । तदाह दृष्टादृष्टभेदेन । न व्यासज्य किं तु प्रत्ये-
कमित्याह दृष्टं सुखं स्रक्चन्दनवनितादिभोगजन्म अदृष्टं च सुखं स्वर्गादि ।
एवं च दुःखनिवृत्तिरपि श्रेयो दृष्टमदृष्टं चेति योजनीयम् । चकारलोपात् ।
अहितनिवृत्तेः श्रेयस आत्यन्तिकत्वानात्यन्तिकत्वे तदृष्टादृष्टस्य भेदमाह
११ अहितनिवृत्तिरपीति । अभिमतं श्रेयो निर्द्धारयति । आत्यन्तिकीति ।
पुनरिति निर्द्धारणमेव द्योतयति । आत्यन्तिकत्वं निवृत्तेर्निवृत्तस्य पुनरनु-
त्पादः स च कार्यकारणतदनुषक्तनिवृत्त्या लभ्यते । न ह्यकारणं कार्य्यं जायते
तदिदमुक्तमेकविंशतिप्रभेदभिन्नदुःखहान्येति । गौणमुख्यभेदेन चैकविं-
शतेः शरीरादीनां दुःखत्वप्रकारानाह एकविंशतीति । षष्ठमिन्द्रियं मनः । तस्य
विषया इच्छाद्वेषप्रयत्नाः । यद्यपि विषयः शरीरमपि तथाऽपि अन्यथाऽस्य
दुःखहेतुभाव इत्याह शरीरमिति । शरीरावच्छिन्न आत्मप्रदेशो* दुःखायत-
नमिति शरीरं दुःखायतनमुक्तम् । इन्द्रियविषयबुद्धीनां दुःखत्वोपचारे का-
रणमाह इन्द्रियाणीति । तत्रेन्द्रियाणि तावद्गन्धादिविषयबोधनाद् विषया
बोध्यत्वात् । बुद्धयस्तु साक्षाद् दुःखसाधनानीति दुःखत्वेनोपचर्य्यन्ते । सुखे
दुःखत्वोपचारे बीजमाह । सुखमिति । साधनपारतन्त्र्य क्षयित्वं काम इति
दुःखहेतवः सकलसुखानुषङ्गिणः । तस्मात्सुखमपि दुःखानुषङ्गि उक्तप्रकारदुः-
खहानिसाधनमाह । तस्य हानिरिति । सत्यादितत्त्वज्ञानपरिशोधितपरम-
न्यायमार्गः खलु हेयोपादेयभूतद्वादशभूतप्रमेयतत्त्वपरिभावनमुवा प्रसंख्यानेन
निर्मूलनिखिलप्रवृत्तिहेतुदोषानुषङ्गः प्रवर्तमानो न शरीरेन्द्रियादिहेतुमपूर्वध-
र्माधर्म्मप्रचयमातनोति । अनादिभवपरम्परोपात्तं च धर्माधर्मप्रचयमनन्तम-
प्यनियतविपाकसमयमपि प्रसंख्यानपरिपाकप्रभावात्परिलब्धयुगपद्भोगभागिनः
कायान्निर्माय तत्फलोपभोगात्प्रक्षिणोति । अचिन्त्यसामर्थ्यातिशयो हि समा-
धिः । यथाऽऽहुरत्रभवन्तः पतञ्जलिपादाः "को हि योगप्रभावादृते अग-
स्त्य इव समुद्रं पिबति स इव च दण्डकारण्यं सृजति" इति । सेयमात्यन्तिकी
दुःखनिवृत्तिः श्रेयः तदिदमुक्तं शास्त्रस्य पुरुषश्रेयोऽभिधायकत्वादिति ।

स्यादेतत् । केवलस्य दुःखस्यात्यन्तिकी निवृत्तिः श्रेयः पुरुषप्रवृत्त्य-
ङ्गम् । एवं तु दुःखवत्सुखस्याप्यात्यन्तिकी निवृत्तिरिति कथं श्रेयः कथं च प्रेक्षा-
१८ वत्प्रवृत्त्यङ्गमित्यत आह । पुरुषा रागादिमन्त इति । यद्यपि रागादिमतां

* आत्मप्रदेश इति ग पु पा० ।

पृथग्जनानामेतन्न प्रवृत्त्यङ्गं ते हि मधुविषसंपृक्तमन्नं मधुमधुरतया आपातरम-णीयं विषविषज्ञानमारयतु मा वा मीमरदुपभुञ्जते तावदापाततः सुखं को हि हस्तगतं पादगतं करोतीति विचिन्त्योपभुञ्जते विवेकिनस्तु आयतिमालोचय-न्तः स्वर्गमपि कुपितफणिफणामण्डलच्छायप्रतिममित्यपजहति । तेन मा भूदे-तद्रागादिमतां प्रवृत्त्यङ्गं विवेकिनां तु भविष्यति । अविवेकिनामपि चाप्रति-पन्नविप्रतिपन्नानां विवेकाधानोपायः पूर्वमावेदितः । शास्त्रप्रवृत्त्यङ्गमात्रमेव चेह विवेको वैराग्यमभिमतमिति । **प्रवृत्तेर्द्वैविध्यम्** । एकरूप्यं द्विरूप्यं च । २ ।

पुरुषे भेदो रागवैराग्याभ्यां प्राप्तव्यस्य सर्वस्य सुखस्य दुःखसंभेदेनानिष्टपर्व-निवेशादनिष्टप्रतिषेधार्थैव प्रवृत्तिर्विवेकिनामेकरूपैव । अविवेकिनां तु प्रवृत्ति-र्द्विरूपेत्युक्तम् ।

तदनेन प्रपञ्चेन प्रमाणतो ऽर्थप्रतिपत्तावित्यादिवाक्यस्य तात्प-र्यमभिधाय तदवयवं प्रवृत्तिसामर्थ्यादिति विवरीतुं भूमिमारचयति । **प्रवृत्तेर-पीति** । दृष्टं प्रवृत्तिसामर्थ्यहेतुरिति रागादिमत्प्रवृत्तिसामर्थ्यमुपन्यस्तं न तु वीतरागाणाम् । न हि तत्प्रवृत्तेर्निःश्रेयसाधिगमलक्षणफलसंबन्धो दृष्टो निःश्रे-यसस्यालौकिकत्वात् । **प्रमाणस्यार्थवदनर्थकत्वादि**त्ययुक्तं प्रमाणमनर्थक- ३ । मिति हि विप्रतिषिद्धमित्यत आह **प्रमाणं तावदिति** । न त्वप्रमाणमप्रमा-णमिति गृहीतं प्रवृत्त्यै कल्पते किं तर्हि प्रमाणमिति । न चाप्रमाणे प्रमाण-मित्यभिमानो विना प्रमाणादिसाधर्म्यादिति तत्साधर्म्यं पृच्छति । **किं पुन-रिति** । उत्तरं **सामान्यपरिच्छेदकत्वं** तद्विवृणोति । **प्रमाणेनापीति** । रजतादिज्ञानमपि पुरोवर्तिशुक्लभास्वरं द्रव्यं परिच्छिनत्ति । शुक्तिज्ञानमपि केव-लमेकस्मिन्नेव विषये रजतसमारोपापवादाभ्यां बुद्ध्योर्बाध्यबाधकभाव इति भा-वः । तदेवमुभयतः प्रवृत्तिः समर्थात् प्रमाणादेव नाप्रमाणादर्थव्यभिचारिण इत्या-ह **सो ऽयं प्रमातेति** । ततश्च सिद्धः समर्थायाः प्रवृत्तेरनर्थवद्व्यतिरेक इत्य-भिसंधिः । तथा च समर्था प्रवृत्तिरनर्थवद्व्यतिरेकसंपन्नप्रमाणस्यार्थवत्त्वे हेतुरि-त्याह तस्याः समर्थायाः प्रवृत्तेर्हेतोः पुनः प्रमाणस्यार्थवत्त्वमर्थाव्यभिचारि-त्वम् । असमर्था त्वनन्तरा ऽपि न संबध्यते योग्यताविरहात् । संप्रत्यादि-वाक्यमाक्षेप्तुमनुवदति । **प्रमाणत इति** । आक्षिपति **परस्परेति** । समाधत्ते नेति । आक्षेपवाक्यं विभजते । **यदि प्रमाणत इति** । न तावदर्थप्रतिपत्तिः-

प्रवृत्तिहेतुरपि तु तद्विनिश्चयः । न च तन्मात्रेण अपि तु तदर्थजातीयस्य
श्रेयोहेतुतया ऽसकृदुपलभ्यमानस्यार्थस्य तज्जातीयतया श्रेयोहेतुभावानुमा
नसहिता विनिश्चितिः प्रवृत्तिहेतुः । सेयं सैव च व्यवहितानुमानसहिता प्रमा
णतो ऽर्थप्रतिपत्तिः विनिश्चितिः समर्थप्रवृत्तिनिमित्तमुक्ता । न चार्थविनिश्चयः
प्रामाण्यावधारणमन्तरेण । प्रामाण्यावधारणं च श्रेयोहेतुतानुमाननिमित्त
व्याप्तिग्रहणं च न समर्थप्रवृत्तिं विना । न च समर्था प्रवृत्तिस्ताभ्यां विनेति
२० परस्पराश्रयता तदिदमुक्तं **यदि पूर्वं प्रमाणतो ऽर्थप्रतिपत्ति**र्विनिश्चिति
रर्थवता ऽनुमानसहिता प्रवृत्तिसामर्थ्यमन्तरेण किमिति प्रतिपद्यते विनिश्च
नोति ( नोपाय इयेति तोयमेव चेति )* । समाधानं विभजते । तच्च नैवमिति ।
यत्तावदुक्तं प्रामाण्यस्य दुरवधारणत्वादर्थविनिश्चयाभावान्न प्रवृत्तिसामर्थ्य
मिति । तत्र ब्रूमः सत्यं न स्वतः प्रामाण्यं शक्यावधारणं परतस्तु दृष्टा
र्थेष्वनभ्यासदशापन्नेषु प्रवृत्तिसामर्थ्यादेव तद्गम्यते । अर्थप्रतीत्यधीना तु प्रवृ
त्तिर्नार्थावधारणाधीना । अर्थसन्देहादपि प्रेक्षावतां प्रवृत्तेः । नो खलूपायता
विनिश्चयेनापि प्रवर्तमाना अनागतफले न सन्दिहते । तदमी सन्दिहाना
अपि प्रवर्तमानाः प्रवृत्तिसामर्थ्यात्प्रमाणस्य तत्त्वं विनिश्चित्य तज्जातीयस्या
न्यस्याभ्यासदशापन्नस्य प्रवृत्तिसामर्थ्योत्पादेन तज्जातीयत्वेन लिङ्गेन प्रामा
ण्यावधारणादर्थविनिश्चयेन प्रवर्तन्ते । अत्र च दृष्टार्थमन्त्रायुर्वेदप्रामाण्यं प्रवृ
त्तिसामर्थ्येनावधार्य तज्जातीयस्यादृष्टार्थस्य वेदस्य विना ऽपि प्रवृत्तिसामर्थ्य
प्रामाण्यावधारणमाप्तोक्तत्वेन निवेदयिष्यते । न च फलज्ञानं परीक्ष्यते प्रमा
णवद्धि तस्य यादृशतादृशस्यापीष्टत्वादिफलक्षणत्वात् । फलस्य तत्साधनत्वं ते
परीक्षन्ते । तथा हि तोयज्ञाने पिपासितेन तत्र प्रवृत्तेन प्रवृत्तस्य तदाप्ति
प्राप्तस्य पानं पानेन चोदन्योपशान्तिरित्येतावतैव प्रमाता कृती भवति न
पुनरुदन्योपशान्तिमपि परीक्षते तस्य यादृ[illegible]स्यापीष्टत्वादिति के चित् ।
वयं तु ब्रूमः । फलज्ञा[illegible] [illegible]दशाप[illegible] [illegible]जातीयत्वेन लिङ्गेनाव

तत्पूर्वसाधर्म्येण पूर्वतमस्येत्यनादितैवाथ परिहारः । एतेषु च मध्ये यत्फ-
लज्ञानं स्वप्नाद्युपभोगतुल्यतया शङ्कितव्यभिचारं तदनभ्यासदशापन्नमतः
प्रवृत्तिसामर्थ्ये तस्य प्रामाण्यावधारणाय निवेशनीयमित्यर्थः । प्रतिपत्तिप्रवृत्ति-
सामर्थ्ययोरनादित्वमुक्तम् । अनुमानस्य तु प्रवृत्तिसामर्थ्यलिङ्गजन्मनो
ऽन्यस्य वा निरस्तसमस्तव्यभिचारशङ्कस्य स्वत एव प्रामाण्यमनुमेयाव्यभि-
चारिलिङ्गसमुत्थत्वात् । न हि लिङ्गाकारं ज्ञानं लिङ्गं विना न च लिङ्गं लिङ्गिनं
विनेति । अत एव गृहीताव्यभिचारलिङ्गसमुत्थं निष्कम्पमुत्पद्यते ज्ञानम् । प्र-
त्यक्षज्ञानमर्थादुत्पद्यमानमपि न गृहीताव्यभिचारादपि तु सत्तामात्रेणावस्थि-
तात् । न च कारणान्तराण्यपीन्द्रियादीनि अस्यार्थेन गृहीताव्यभिचाराणि न वा
ऽर्थेनाव्यभिचाराणि । शाब्दं तु ज्ञानं नार्थादुत्पद्यते तदभावे सति शब्दे
भावात् । नापि लिङ्गस्येव शब्दस्यार्थाव्यभिचारः किं तु सङ्केतग्रहणमात्रा-
त्पदार्थप्रत्यायनेन वाक्यार्थमवगमयति शब्दः । तस्मात्प्रत्यक्षशाब्दविज्ञा-
नयोरेव स्वतो ऽव्यभिचारग्रह इति प्रवृत्तिसामर्थ्यं तज्जातीयत्वं वा लिङ्ग-
मर्थाव्यभिचारानुसरणीयं ज्ञानगततज्जातीयत्वलिङ्गग्राहिणश्च ज्ञानस्य
मानसप्रत्यक्षस्य तादृशस्यादृष्टव्यभिचारतया परितो निरस्तसमस्तविभ्रमा-
शङ्कस्य स्वतः प्रामाण्यमिति नानवस्था । एतेनोपमानं व्याख्यातम् । संवे-
दनस्य चार्थाव्यभिचारित्वकथनेन तत्करणानामिन्द्रियादीनामपि प्रमाणत्व-
मुक्तं वेदितव्यम् । न ह्यव्यभिचारिज्ञानजनकत्वादन्यत्प्रामाण्यम् । न
चार्थव्यभिचारिणामिन्द्रियादीनां कथमर्थाव्यभिचारिज्ञानजनकत्वमिति सांप्र-
तम् । कारणस्वभावनियोगपर्यनुयोगयोरशक्यत्वात् । तस्मादर्थसंदेहादन-
भ्यासदशापन्नात्प्रवृत्तौ प्रमाणतो ऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यसंभवात्प्रवृत्तिसा-
मर्थ्यज्ञानस्य चाभ्यासदशापन्नस्य तज्जातीयत्वेन प्रामाण्यानुमानादनभ्या-
सदशापन्नस्य तु प्रवृत्तिसामर्थ्यानन्तरज्ञानेन प्रामाण्यानुमानादनादित्वाच्चा-
र्थप्रतिपत्तिप्रवृत्तिसामर्थ्ययोः परस्पराश्रयत्वमस्तीति । अर्थस्यापेक्षितोपाय-
तानुमानप्रवृत्तिसामर्थ्ययोः परस्परापेक्षित्वमापद्यते । तत्राप्यनादिता
परिहारः । उत्पन्नमात्रस्य हि बालकस्य स्तनं दृष्ट्वा प्राग्भवीयतज्जातीया-
पेक्षितानुभवजनितः संस्कार आविरस्ति ततश्च स्मरणं ततो ऽपेक्षितोपा-
यतानुमानं ततः प्रवृत्तिस्ततः तस्याः सामर्थ्यम् । एवं पूर्वस्मिन् पूर्वस्मिञ्ज-

२० व्यनीत्यनादितया तु बीजाङ्कुरवत्परस्परापेक्षितेति । **अर्थप्रतिपत्तिरिति ।**
अर्थस्योपेक्षितोपायमात्रप्रतिपत्तिरित्यर्थः । तस्मात्सर्वमवदातम् ।

तदनेनोक्तप्रक्रमेण प्रमाणतोऽर्थप्रतिपत्तावित्यस्य शास्त्रानुसन्धानवा
क्यस्य तात्पर्यं च समाहितम् । इदानीमस्यैव तात्पर्यमाह । **प्रामाण्यप्रवृ-
त्त्योर्वेति*** । अथेदमाशङ्क्यते । मुनिर्हि प्रत्यक्षसंशयादिव्युत्पादनद्वारेण साक्षा
द्धानेन शास्त्रेणान्वीक्षिक्या हेयोपादेयभावात्स्थितद्वादशविधप्रमेयव्युत्पादक-
न्यायमनुमानापरनामानं निःश्रेयससिद्धये व्युत्पादयाम्बभूव । न च न्यायतः प्र
माणात्प्रमेयतत्त्वनिश्चयमात्रान्निःश्रेयसाधिगमो ऽपि तु आद्यन्तवर्तिना दशाना
प्रमेयाणा दुःखघ्नभावनम् आत्मनश्च याथात्म्यभावनामित्यादिभिः प्रवृ-
त्तिभिः आत्मतत्त्वसाक्षात्कारवैराग्यपरिपाकक्रमेणापूर्वयोर्धर्माधर्मयोरनुत्पादे-
नोत्पन्नयोश्चोपभोगात्प्रक्षयेणेति । तथा च निःश्रेयसप्राप्तेः कारणत्वात्प्रमा-
णान्न्यायात्प्रवृत्तिरेव बलीयसी न न्यायः । तस्मात्प्रवृत्तिरेव व्युत्पादनीया न
भा न्यायो निःश्रेयसहेतुरपि प्रवृत्तेरन्तरङ्गत्वादिति । तदेतदुपतिष्ठते **प्रमाणतो
ऽर्थप्रतिपत्तौ** सत्यां प्रवृत्तौ सामर्थ्ये फलेनाभिसम्बन्धो न तु प्रमाणतो ऽस
त्यामर्थप्रतिपत्तौ । तस्मादर्थवत्प्रयोजनवत्प्रमाणमपि प्रवृत्तिवदेव । एतदुक्तं
भवति । यथान्तरङ्गतया प्रवृत्तिर्बलीयसी एवं मूलकारणतया प्रमाणमपि ।
न ह्यप्रमाणात्प्रवृत्तिः फलेनाभिसम्बध्यते किं तु प्रमाणात् । तस्मात्तुल्यमु-
भयमपि । तथा ऽपि प्रमाणव्युत्पादनेन प्रवृत्तिरपि व्युत्पादिता भवतीति
प्रमाणस्य व्युत्पादनमेवाकारि शास्त्रे न तु प्रवृत्तेः । सामान्याभिधान पर-
मन्यायपर तस्यैव प्रकृतत्वादिति प्रामाण्यज्ञानोपायप्रतिपादनपरतया ऽनु-
सन्धानवाक्यत्वमस्य पूर्वमुक्तं सम्प्रति परपर्यनुयोगमुखेनानुसन्धानवाक्यत्व
१० प्रतिपादयति । लोकवृत्तेति । तथा हि प्रमाणप्रवृत्त्युपाय प्रत्याचक्षाण एव
प्रष्टव्यो जायते किं भवान्प्रमाणेन प्रमाणज्ञानोपाय प्रत्याचष्टे अप्रमाणेन वा ।
यदि ब्रूयात्प्रमाणेनेति स प्रतिवक्तव्य. प्रमाणज्ञानोपायमविद्वान्कथं भवाने-
वमाहेति । अप्रमाणेनेति चेत् । अनुचया वनितव्यम् । अथ प्रमाणेना-
गृहीतप्रामाण्यनेति । याहनयोर्विसंवाद । तस्मादनिच्छता ऽपि त्वया
लोकवृत्तमनुसरणीयम् । अन्यथा न लौकिको न परीक्षक उन्मत्तवदुपेक्ष-
णीय स्याद् इति । तदिद लोकवृत्तमाश्रित्य बोधयितुमनेन भाष्येणानूद्यते

* प्रमाणप्रवृत्त्योर्वेति मुद्रितवार्त्तिक पाठः । २ । पृ ५ ।

प्रमाणतो ऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणं. यतो ऽतः सर्वः प्रमाता प्रमाणेनावगतार्थवत्त्वेनार्थमवधार्य प्रवर्तमानः फलमुपलभतइति । लोकवृत्तं सत्प्रमाणत इत्यादिना वाक्येन कारणप्रदर्शनद्वारेणानूद्यते ।

अस्यैव भाष्यस्य तात्पर्यान्तरं वक्तुं भूमिमारचयति । हेयहानेति । अर्थो ४ । ऽर्थशब्दः प्रमाणतो ऽर्थप्रतिपत्तावित्यत्र स्थितः पदं वाचकं येषां तानि तथा । एतद्वार्तिकग्रन्थस्यैतादृशं व्याख्यानं भाष्यगतस्य त्वन्यथा भविष्यति । उपायः शास्त्रमिति । शास्त्रशब्दस्तदर्थपरः अर्थस्यापि शब्दवच्छास्त्रशरीरत्वात् । अत्र च हेयहानाधिगन्तव्यपदैः प्रमाणप्रमेययोरुपादानाद्गोबलीवर्दन्यायेन संशयादिषु निग्रहस्थानान्तेषु शास्त्रपदं प्रवर्तते । तेनोपायपदेन संशयादयो निग्रहस्थानान्ता यथोक्ता इति । ग्रहणकवाक्यं विवृणोति । हेयमिति । तात्पर्यमाह । एतस्मिंश्चेति । येन प्रमाणप्रमाप्रमेयप्रमातृरूपं चतुर्वर्गान्तरमपि सूचयति । तत्र हेयादिचतुर्वर्गे अर्थ्यमानतया ऽर्थपदसूचिते प्रमाणादिचतुर्वर्गे च प्रमाणस्य प्राधान्यप्रदर्शनार्थमिदं भाष्यम् । यद्यपि चतुर्वर्गाद्व्यस्तत्वावगमो निःश्रेयसाधिगमहेतुस्तथा ऽपि प्रमाणमेव प्रधानम् । तन्मूलत्वादितरसिद्धेः । तदिदमुक्तमर्थवदिति । अतिशायने मतुप् । हेयाद्यपेक्षया प्रमात्राद्यपेक्षया चातिशयेन प्रयोजनवत्प्रमाणम् । कस्मात् प्रमाणतो ऽर्थप्रतिपत्तौ सत्यां प्रवृत्तस्य प्रमातुस्तदितरप्रतिलम्भात् । प्रमायास्तु तत्कार्यत्वात् । तदिदमुक्तं प्रवृत्तिसामर्थ्यादिति । तदेतस्मात्प्राधान्याद्विवक्षामे भदेन विपर्यादुद्घात्याद्विधः प्रमाणस्येति । एतेन यदाहुरेके यदि प्राधान्यात्प्राथम्यं तत् प्रमेयस्यैव । अथोपायत्वात्ततः संशयादीनां तेषां प्रमाणोपायत्वात् । कस्मात्प्रमाणादिभ्यः प्राथम्यं प्रमाणस्येति तन्निरस्तं प्रमाणोपायानामपि संशयादीनां प्रमाणाधीनत्वादिति । नन्ववगतमर्थपदतया हेयादिचतुर्वर्गो दर्शित इति । प्रमाणादिचतुर्वर्गस्तु कथं प्रदर्श्यतइति पृच्छति । कथं पुनरिति । इतरं प्रमाणप्रमेयाधिगत्य इति । तदेवं तात्पर्यं व्याख्याय अवयवार्थं व्याख्यातुमुपक्रमते । तदिदं वाक्यमवयवश उपन्यस्य वर्ण्यते । व्याख्यायते अवयवश इति । तथावयवेषु व्याख्यातव्येषु प्राथम्यात्प्रमाणत इति विवृणोति । तस्रेति । विभजते प्रमाणत इतीयं निमित्तपञ्चमी चेत् ! कस्मात्प्रमाणादिति नाभिहितमित्यत आह । अस्य प्रमाणेत इति । प्रमभू-

तस्याभिधानं वचनव्याप्त्यर्थं विभक्तिव्याप्त्यर्थं च वचनव्याप्त्यर्थमेव मृष्या-
महे न तु विभक्तिव्याप्त्यर्थमिति पञ्चम्या व्यतिरेकेण तस्याभावादित्याह । कथं
पुनरिति । परिहरति । लभ्यत इति । व्याप्तेः प्रयोजनं पृच्छति । किं सिद्ध-
मिति उत्तरं वचनव्याप्त्या संप्लवो व्यवस्था च । तदुभयं विभजते प्रमा-
णेनेति । एव द्वयोर्बहूनां च संग्रहः प्रमाणानां तत्रैकस्याप्यस्ति प्रतिपत्तिसाधनत्वं
प्रमाणस्येति कथयितुं संप्लवावसरे ऽपि प्रमाणेनेत्युक्तम् । अत एव व्यवस्थाया-
मेवकारः प्रमाणेनैवेति । विभक्तिव्याप्तेः प्रयोजनमाह । विभक्तिव्याप्त्या
हेतुकरणभावः । अवगम्यत इत्यनुषज्यते । तद्विभजते । प्रमाणादर्था-
धिगतिर्भवतीति हेतुत्वं गम्यते । प्रमाणेनार्थाधिगतिर्भवतीति करणरूपार्थो
गम्यत इति संबन्धः कस्मात्पुनः करणार्थो गम्यत इत्यत आह । प्रमाणेनेति ।
फलमर्थाधिगतिं साधयतीति साधकतमत्वात् । अत्र च करणभावनान्तरीयकस्य ·
हेतुभावस्य पञ्चम्या अभिधानं प्रमाणफलयोस्तादात्म्यप्रतिषेधार्थं भेदाधिष्ठान-
त्वाद्धेतुफलभावस्य न खलु परशुरेव छिदेति । प्रमाणप्रातिपदिकेन च करणत्वा-
नुवादेन प्रमाकारकान्तरेभ्यो ऽभ्यर्हितत्वेनास्य व्युत्पाद्यत्वं च प्राधान्यं च युक्त-
मिति दर्शयितुम् । संप्लवमाक्षिपति । संप्लवेति । समाधत्ते । नेति । आक्षेपं विभजते
स्यान्मतिरिति । विभिन्नो भिन्नो विषयो येषां तानि तथा । बहुवचनमान्तर्गणि-
कभेदाभिप्रायम् । अर्थसामर्थ्यसमुत्थं हि प्रत्यक्षमर्थगोचरम् । स यथार्थः प्रत्यक्ष-
गोचरो यो ज्ञानप्रतिभासमात्मनो ऽन्वयव्यतिरेकावनुकारयति । न च सामान्य
निरस्तसमस्तार्थक्रियासामर्थ्यमेवं भवितुमर्हति । स्वलक्षणं तु स्यात् तदेव पर-
मार्थसत् । अर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः । एतदेवास्य स्वमसाधारणतत्त्वं
यद्देशतो ऽननुगमेनादेशात्मकस्य परमार्थस्य कालतो ऽननुगमेन च क्षणिकत्व-
म् । तस्मात्स्वलक्षणविषयं प्रत्यक्षम् । न च स्वलक्षणमनुमानस्यापि गोचरः । त-
द्धि गृहीतप्रतिबन्धलिङ्गहेतुकं प्रतिबन्धश्च तादात्म्यतदुत्पत्तिलक्षणः स्वल-
क्षणविषयो ऽशक्यग्रह इति सामान्यधर्माश्रयते । न च सामान्यमेकमनेकदेश-
कालावस्थाव्यापि भवितुमर्हति । तदिदमनादिवासनोद्भवविकल्पाधिष्ठानं विक-
ल्पाकारस्य वा ऽलीकस्य वा ऽस्त्वनुमानगोचरो ऽभ्युपेयम् । तत्र साधारणासा-
धारणत्वाद्वा स्वरूपाद्व्यावृत्तविषयप्रतिभासस्याशून्यव्यावृत्तिनिष्ठम् । यस्य तु साधारणासा-
धारणत्वं तदन्यव्यावृत्तिनिष्ठमेव यथा ऽमूर्तत्वम् । तद्विज्ञानादौ भावे भावि-

घटादौ भावाभावे साधारणम् भावाभावसाधारणश्च विकल्पगोचरो ऽस्ति
घटो ऽस्ति नास्ति घट इति । यदि पुनरसाधारणो भावो भवेदस्तिशब्दो न
युज्येत पुनरुक्तत्वात् । नास्तीत्यपि न वक्तव्यं विरोधात् । एवमभावासाधा-
रण्ये ऽपि वाच्यम् । न चालीकस्य सर्वसामर्थ्यविरहिणः परमार्थसता स्वल-
क्षणेन सादृश्यं मन्यते ऽन्यव्यावृत्तेः । न च गौरिति नियतौ बुद्धिव्यपदेशौ
विना ऽश्वादिव्यावृत्तिम् । तस्मात्सामान्यमन्यव्यावृत्तिरूपमग्राह्यं ग्राह्यभे-
दाग्रहाद्ग्राह्यत्वेनाध्यवसानमनुमानं बाह्ये प्रवर्तयति । पारम्पर्येण च बाह्य-
प्रतिबन्धाद्ग्राह्यं प्रापयत्संवादकं सद् भ्रान्तमपि प्रमाणमयमशात्प्रमाणम् ।
तदस्य न स्वलक्षणं गोचरः । प्रत्यक्षमपि न सामान्यगोचरमित्यावेदितम् ।
न चाभ्यामन्यत्प्रमाणमस्ति । प्रमाणस्य सतो ऽत्रैवान्तर्भावात् । अनन्तर्भावे
वा प्रमाणत्वानुपपत्तेः । न च सामान्यविशेषाभ्यामन्यदस्ति प्रमेयान्तरं
यत्रैते तत्संप्लोष्येते इत्यर्थः । समाधानवाक्यं विवृणोति । एतच्च नेति । यथा ५
चैतत्तथा तत्र निवेदयिष्यते । विशेषो व्यवच्छेदकः स च कम्बुकोटरादिरन्य-
श्च व्यवस्थासंकरोदाहरणान्याह । इन्द्रियवदिति । संप्लवमनुभाष्यमाण आह ।
अधिगतत्वादिति । समाधत्ते नान्यथेति । आक्षेपं विभजते । यदीति । स्या-
देतत् । नास्ति वैयर्थ्यमधिगतीनामाशुतरविनाशितया तद्गोचराधिगत्यन्तरो-
त्पादं प्रति प्रमाणान्तरस्यार्थवत्त्वादित्यत आह । अधिगतं चार्थमधिगमयता
प्रमाणेनेति । यद्यप्यधिगतय आशुतरविनाशिन्यस्तथा ऽप्येकतरप्रमाणजनिता-
ऽधिगतिलब्धजन्मनः संस्कारादेव स्थायिनस्तदर्थस्मृतिसंभवादधिगत-
मर्थमधिगमयता प्रमाणेन पिष्टं पिष्टं स्यात् । समाधिवाक्यं विवरीतुमनुवदति ।
नान्यथेति । विवृणोति । न ब्रूम इति । अयमभिसंधिः । न हि प्रमाणकार-
णानि प्रेक्षावन्ति येनैवमालोचयेयुः यज्जनितमेव चास्मासु केन पिष्टमर्थं
धर्मिहोदास्महइति । नापि स्वकारणलब्धजन्मानि प्रमाणानि दर्शितो
ऽयमर्थो ऽन्यथमेन चास्मासु प्रमाणेन कृतमस्माभिरिति विरन्तुमर्हन्ति ।
प्रमातुश्चेतनत्वादयमनुयोग इति चेद् न प्रियस्य वस्तुनो ऽनेन भूयो भूयः
प्रमित्सितत्वात् । अप्रमित्सितस्यापि च दुर्जनवचनादेः प्रमेयस्यानेन प्रमी-
यमाणत्वात् । तस्मात्र प्रमाणाभिसंधानात्प्रमाणस्य प्रवृत्तिरप्रवृत्तिर्वा ऽयं किं
तु सामर्थ्याद् अन्यथा ऽनिद्रादावदिदुःखस्याप्रत्यक्षत्वप्रसङ्गः । यत्तु प्रमाणं

प्रमित्साधीनप्रवृत्ति तद्यदि प्रमाता न व्यापारयेत् किमायातं प्रमाणस्य न हि
तोयमपि पिपासुना न पीयतइति तस्य पिपासोपशमशक्तिरपैति । तस्मा-
त्प्रत्यक्षसामग्रीजनिता बुद्धिः प्रमा तज्जनकानि च प्रमाणानि समानविषया
ण्यपि । स एव चानेन सामग्रीभेदः प्रदर्शितो ऽन्यथा तु प्रत्यक्षेणेत्यादिना ।
यद्यपि साक्षात्कारासाक्षात्कारादिरपि प्रकारभेदो ऽस्ति तथा ऽप्यसौ प्रकृता-
नुपयोगान्नोक्तः । यदि च दृष्ट्या त्वया गृहीतमिति कुतः चक्षुषा त्वचा वा
गृहीतमिति कुतः त्वचेत्युच्यते न रूपविज्ञानं स्पर्शविज्ञानं वोपजायेत ।
तदर्थे चक्षुस्त्वक्त्वाभ्युपेते तथा च प्रकारवैयर्थ्ये ऽपि व्यवस्थाया न वैयर्थ्य-
। ३ मित्याह । विषयान्तरइति । प्रकृतमुपसंहरति । तस्मादिति ।

विभक्तार्थं निरूप्य प्रतिपादितार्थनिरूपणमवतारयति प्रमाणेति ।
अयथार्थो ऽनेनेत्यवधारणं विचार इति । विचारणीय भावमभिसारो पृच्छति ।
किं पुनरिति । के चिदाहुरनधिगतार्थगन्तृ प्रमाणमिति । विषयसारूप्य सा
कारस्य विज्ञानस्येत्यन्ये । विज्ञानस्यैवानाकारस्यात्मानात्मप्रकाशनसामर्थ्य
मित्यपरे । उपलब्धिसाधनमिति वृद्धाः । तस्माद्विप्रतिपत्तेः संशयात्प्रश्न ।
। ४ मायप्रश्नस्याख्यानेन मविमृष्टो व्याख्यानं । उत्तरम् । उपलब्धिहेतुः
प्रमाणं न च संशयविपर्यासरूपोपलब्धिकारणयोः प्रसङ्गः अर्थवदित्यधि
कारात् । तयोश्चार्थपदाभिगतार्थव्यभिचारेणानर्थकत्वात् । नो खलु विकल्प्यमान
वस्तुनि अर्थक्रियासु योपयुज्यते । स्यादेतत् स्मृतिहेतोरपि प्रामाण्यप्रसङ्गः ।
न ह्यसौ नोपलब्धिहेतुः न चार्थसहकारि प्रमाणमिति संस्कारस्यार्थसहकारि-
ताविरहादप्रामाण्यमिति साम्प्रतम् । नष्टीभूतस्य पिपीलिकापङ्क्तिचरणस्य चाती-
तानागतवर्षलिङ्गस्य शब्दस्यातीतानागतगोचरस्यार्थसहकारितावियोगादप्र-
माणत्वप्रसङ्गात् । ज्ञापकत्वेन कार्यत्वेन वा कथं चिदर्थसम्बन्धे संस्कारस्यापि
तत्समानमिति तस्यापि स्मृतिरूपोपलब्धिहेतोः प्रामाण्यं प्रसक्तम् । मैवम् ।
प्रमाणशब्देन तत्साधनस्याभिधानात् । प्रमासाधनं हि प्रमाणं न च स्मृतिः प्रमा लोका-
धीनावधारणो हि शब्दार्थसम्बन्धः । लोकश्च संस्कारमात्रजन्मनः स्मृतेर-
न्यामुपलब्धिमर्थाव्यभिचारिणीं प्रमामाचष्टे तस्मात्तद्धेतुः प्रमाणमिति न स्मृति
हेतोः प्रसङ्गः । अनधिगतार्थगन्तृत्वं च धारावाहिकविज्ञानानामधिगतार्थ-
गोचराणां लोकसिद्धप्रमाणभावानां प्रामाण्यं विहन्तीति नाद्रियामहे । न च

कालभेदेनाधिगतगोचरत्वं धारावाहिकानामिति युक्तम् । परमसूक्ष्माणां कालकलाविभेदानां पिशितलोचनैरस्मादृशैरनाकलनात् । न चाद्येनैव विज्ञानेनोपदर्शितत्वादर्थस्य प्रवर्तितत्वात्पुरुषस्य प्रापितत्वाच्चोत्तरेषामप्रामाण्यमेव ज्ञानानामिति वाच्यम् । न हि विज्ञानस्यार्थप्रापणं प्रवर्तनादन्यद् न च प्रवर्तनमर्थप्रदर्शनादन्यत् । तस्मादर्थप्रदर्शनमात्रव्यापारमेव ज्ञानं प्रवर्तकं प्रापकं च । प्रदर्शनं च पूर्ववदुत्तरेषामपि विज्ञानानामभिन्नमिति कथं पूर्वमेव प्रमाणं नोत्तराण्यपि । पुरुषापेक्षया तु प्रामाण्ये चन्द्रतारकादिविज्ञानस्य पुरुषानपेक्षितस्याप्रामाण्यप्रसङ्गः । न चातिदवीयस्तया तदर्थस्य हेयतया तदपि पुरुषस्यापेक्षितं तस्योपेक्षणीयविषयत्वात् । न चोपेक्षणीयमप्यनुपादेयत्वाद्धेयमिति निवेदयिष्यते । उपलब्धिहेतुं च प्रमाणं वदता अनधिगतार्थगन्तृत्वं च साकल्यं चात्मानात्मप्रकाशनशक्तिश्च प्रमाणमिति निरस्तानि भवन्ति । उपलब्धिमात्रस्यार्थाव्यभिचारिणः स्मृतेरन्यस्य प्रमाशब्देनाभिधानात् । हेतुग्रहेण साकल्यशक्त्योः फलादभिन्नयोरपाकरणात् हेतुहेतुमद्भावस्य तादात्म्ये ऽनुपपत्तेरिति । उपलब्धिहेतुत्वं च प्रमाणत्वम् । भवितृव्याख्यानेन भावो व्याख्यातः । तदेव ज्ञानमज्ञानं वा । उपलब्धिहेतुः प्रमाणं तस्य च भावस्तत्त्वमिति स्थितम् । तदेतदतिव्यापकत्वेनाक्षिपति । समानत्वादिति । समाधत्ते अर्थं विशेष इति । अयमर्थः । सर्वः कर्ता करणगोचरव्यापारो न साक्षात्फले व्याप्रियते । करणं च द्विधा सिद्धमसिद्धं परश्वादि दारुद्वैधीभावयोर्दारुणोर्दारुणि पातयन् दारु छिनत्तीत्युच्यते न तु साक्षात्कर्तृव्यापारगोचरो दारुद्वैधीभावः किं तु स्वाङ्गद्वयगतः करणीभूतस्य परशोः संयोगस्योद्यमननिपातनलक्षणस्तु कर्तृव्यापारः परशुगोचर एव । एवं स्वर्गकामो ऽपि कर्ता न साक्षात्स्वर्गे व्याप्रियते किं तु तत्करणं यागमसिद्धं साधयति । स्वर्गस्तु यागव्यापारादेवापूर्वाभिधानाच्चेतनाश्रयाद्दयितकालान्तरस्थायिदेहभेदासादितपरिणतिविशेषात्साक्षादुत्पद्यते तद्वदिहापि सिद्धमिन्द्रियादि असिद्धं च सन्निकर्षादि व्यापारमुत्पादयत्करणमेव चरितार्थं करणं त्विन्द्रियादि तत्सन्निकर्षादि वा नान्यत्र चरितार्थमिति साक्षादुपलब्धावेव फले व्याप्रियते । प्रमेयस्य तु प्रत्ययादन्यत्रोपलब्धिहेतुभाव एव नास्ति केवलं प्रमाणविषयभावमात्रेणोपयुज्यते । प्रमातुस्तु हेतुभावः प्रत्यये ऽभिप्रेतो न चाविन्द्रिय-

सत्त्वस्माच्चोपयुज्यते प्रमेयम् । इन्द्रियमेव तस्मात्सन्निकर्षादिना साक्षात्प्र-
माहेतुः । तस्मिंस्तु प्रमेये न प्रमाता साक्षात्प्रमाहेतुः कर्तृत्वात् । यो यः कर्ता
स सर्वो न साक्षात्फलहेतुः यथा व्रश्चनः । यथा वा यजमानादिस्तथा
तस्मात्तथा । तथा प्रत्यक्षं प्रमेये न साक्षात्प्रमाहेतुः प्रमेयत्वात् । यद्यत्प्रमेयं
तत्तत्सर्वं न साक्षात्प्रमाहेतुः अनुमेयादिवत् तथा चैतत्तथा । तदिदं प्रमा-
तृप्रमेययोः प्रमाणे चरितार्थत्वमचरितार्थत्वं प्रमाणस्य तस्मात्तदेव फलहेतुः ।
प्रमातृप्रमेये तु फलोद्देशेन प्रवृत्ते इति तद्धेतू इव चिदिति । चोदयति । अक-
रणेति । अकरणः कर्ता प्रमाणमपि व्याप्तमर्हतीत्यर्थः । परिहरति । नेन्द्रि-
यार्थसंनिकर्षस्येति । यदि ज्ञानं प्रमाणं तदा ज्ञानस्य प्रमाणस्योत्पत्तावि-
त्यर्थः । पुनश्चोदयति । यदि तर्हीति । परिहरति तस्मिन्नपीति । चोद-
यति । यदि प्रमातृप्रमेयाभ्यां सद्भ्यां प्रमाणमिति । प्रमाणान्तरेण
प्रमाया अभावात्प्रमातृप्रमेययोरसिद्धिरित्यर्थः । पृच्छति । कथमिति । उत्तरं
प्रमादमितीति । अथ स्वरूपमेव कारकं कस्मान्न भवति तत्तु क्रियावत्स्वस्य
पुरस्तादप्यस्तीत्यत आह न च द्रव्यमात्रमिति । अस्तु तर्हि तद्गतो व्यापारः
प्रधानक्रियायाः कारणं तस्याः प्रधानक्रियाया निमित्तत्वादित्यत आह । न च
क्रियामात्रम् । न हि स्वरूपेण देवदत्तो व्रश्चनः नापि तद्गतो व्यापार उद्यमन-
निपातनादि काष्ठच्छेदः । क्व तर्हि कारकशब्दः प्रवर्त्तत इत्यत आह । कार-
कशब्दो हीति । प्रधानक्रियासाधने हेतौ अवान्तरक्रियाविशेषयुक्ते कारक-
शब्दः प्रवर्त्तते । *द्वैधीभावो हि फलं प्रधानव्यापारं कर्तुं करणीभूत उद्यमन-
निपतने अवान्तरव्यापारः कर्मभूतस्य दारुणः स्पर्शवद्द्रव्यवतोन्तरकुठारसंयोग
अवान्तरव्यापारः. तेन हि दारु स्वावयवपरिस्पन्दजन्मना अवयवविभागद्वैधी-
भावमनुभवति । तस्मादवान्तरव्यापारयुक्तं कारकमिति सामान्यतः प्रसाध्य
प्रकृते योजयति । प्रमातृप्रमेयशब्दौ चेति । तावन्तरेण क्रिया प्रधानक्रियासि-
त्यर्थः । परिहरति । न पाचकादिशब्दवदिति । लोकाधीनावधारणाधीनः
शब्दार्थसम्बन्धः लोकश्चातीतानागतवर्त्तमानक्रियासम्बन्धमात्रविवक्षया
कारकशब्दान्प्रयुङ्क्ते पाचकमानय पक्ष्यति पाचको ऽयमपाक्षीत्पाचको ऽयं पच-
तीति च तुल्यवदेतेषां विषयप्रयोगदर्शनं तत्कस्य हेतोः अपचत्यपि पाक-
सम्बन्धः प्रत्ययस्ति स्वरूपसंनिधिसद्भावादिति । द्वयी हि गतिः कारकाणां

* द्वैधीभाव हि फलं प्रधानव्यापार इति क पु पा ।

कार्योत्पादनं प्रति स्वरूपं च सहकारिसमवधानं च । तथासत्यपि सहकारिसमवधाने कारकशब्दानां प्रवृत्तेः सत्यपि च स्वरूपे त्रैकाल्यव्यापिनि त्रैकाल्ययोगिकार्यसंभवे प्रवृत्तेः त्रैकाल्ययोगिकार्योपहितमर्यादमेव स्वरूपं कारकशब्दानां प्रवृत्तिनिमित्तमित्यसत्यपि प्रत्युत्पन्नप्रमाहेतुप्रमाणसंबन्धे प्रमातृप्रमेयशब्दयोः प्रवृत्तिरित्युपपन्ने प्रमातृप्रमेयाभ्यां प्रमाणं जन्यत इति । तत्प्रमाणमुपलब्धिसाधनं साक्षान्न प्रमातृप्रमेये इति सिद्धम् ।

सत्यपि चोपलब्धिसाधनत्वे प्रमातृप्रमेययोरुपलब्धिहेतुरित्यप्रसङ्गः साधकतमासाधकतमयोः साधकतमे कार्यसंप्रत्ययात्सातिशयत्वेनोद्भूतत्वात्तस्येत्याह । **साधकतमत्वादिति** । साधकतमार्थं पृच्छति । कः खल्विति । ७ उत्तरं प्रमाणस्य **भावाभावयोः** प्रमायाः कार्यस्य **तद्वत्ता** भावाभाववत्ता साधकतमार्थः । लक्ष्यलक्षणयोरभेदविवक्षया सामानाधिकरण्यं न तु प्रमातृप्रमेयान्वयव्यतिरेकानुविधानमप्यप्रमाया अन्वयव्यतिरेकयोरित्यत आह । **न प्रमातरीति** । प्रमातृप्रमेयाभ्यां सह प्रमोत्पादस्यान्ययोगव्यवच्छेदेन संबन्धः प्रमाणेन सह प्रमोत्पादस्यायोगान्ययोगव्यवच्छेदाभ्यामित्यतिशयः । प्रमातृप्रमेये हि प्रमाणोपक्षीणवृत्तिनी प्रमायां न व्याप्रियेते । तेनान्तरायसंभवान्नावश्यं प्रमातृप्रमेयव्यापारे सति प्रमा भवति । प्रमाणव्यापारे तु प्रमा भवत्येवेति । कल्पान्तरमाह । **यद्वान्वा प्रमिमीते सोऽतिशयः** । प्रमिमीत इति स्वतन्त्रं कर्तारं दर्शयति प्रतिपाद्यात्करणाद्व्यवच्छेत्तुम् । यद्वानेवेति च सावधारणम् । तत्र यद्वानिति कर्त्रन्तरं व्यवच्छिन्नं न हि कर्ता कर्तृमान् किं तु प्रमाणवान् स्वतन्त्रो ह्याश्रयः परतन्त्रेणाश्रीयते । कर्त्रधीनं हि करणमित्याशयेनेदमुक्तम् । प्रमाता प्रमेयवानपि तु विद्यमानत्वात्प्रमेयस्य न तु प्रमेयवानेव । अनुमानादिषु प्रमेयस्यातीतत्वादिना तद्वत्ताविरहात् । न तु लिङ्गादिज्ञानवान्न कदा चिदित्यवधारणफलम् । सोऽयं विशेषः प्रमातृप्रमेयाभ्यां प्रमाणस्य । अस्यैव विशेषस्यातिशयत्वमन्वयव्यतिरेकाभ्यामादर्शयति । **प्रमाणे सतीति** । कल्पान्तरमाह । **सतो वेति** । पूर्वेण भावप्रधानोऽतिशयो यादृशस्य दर्शितस्तादृगन्योऽयं व्यतिरेकप्रधानोऽतिशय इति विशेषः । अकर्तृत्वमहेतुत्वमित्यर्थः । कल्पान्तरमाह । **संयोगवचरमभाविता वा** । इतिकर्तव्यताके हि व्यापियमाणत्वं न तु कारणादिस्वरूपं करणादिशब्दप्रवृत्तिनिमित्तमापन्नं स्वरूप ११

स्यादिति पूर्वमायेदित तच्च सिद्धमसिद्धं वा प्रमातृप्रमेयस्य पश्चादेव तथा
त्वेन सम्पद्यतइति चरमभावीत्युच्यते सेयमस्य चरमभाविता ऽतिशयः ।
यथा तन्तूनां पटे जनयितव्ये अन्त्यः संयोगभेदो यदनन्तरं पट उत्पद्यत-
।२२ इति । कल्पान्तरमाह । प्रतिपत्तेरानन्तर्यं वा । यत एव प्रमाणं चरमभावि
अत एव तदनन्तरं प्रतिपत्तेः प्रमायाः भावात् । प्रतिपत्तेरानन्तर्यमेव प्रमा
णस्यातिशयः । स चेति । चो ऽवधारणे । इदमपि लक्ष्यलक्षणयोरभेदवि-
वक्षयोक्तम् । कल्पान्तरमाह । असाधारणकारणता वा । चतस्रः खल्विमाः
प्रत्यक्षादिप्रमितयो भिन्नबुद्धिव्यपदेशभाजो ऽनुभूयन्ते । न च प्रमाता तद्भेद
हेतुः । तस्य साधारण्यात् । न च प्रमेयमेकस्यापि प्रमेयस्य सर्वप्रति
पत्तिसाधारण्यात् । प्रमाणानि तु यथायथं चतसृष्वसाधारणानीति भिन्नबुद्धि-
व्यपदेशनिबन्धनानि । तदिदमसाधारण्यमतिशयः अपि च पुरुषः प्रमाता
ऽस्य विवक्षितः । कल्पान्तरमाह । प्रमाकारणेति । प्रमायाः असमवायिकारणं
त्वात्ममनःसंयोगः स च सर्वप्रमासाधारणो नासौ प्रमात्रा प्रमेयेण वा शक्यो
विशेष्टुम् । तयोरपि तद्वदेव साधारण्यात् । असाधारणं तु प्रमाणं यथायथमा
त्ममनःसंयोगमवच्छिनत्ति । यथ सुखादिप्रमेयाणामपि मनः प्रमासाधारणं व्यव-
च्छेदकं द्रष्टव्यम् । सो ऽयमस्यातिशयः । अतिशयातिशयिनोरभेदविवक्षया
ऽतिशयशब्दवाच्यमित्युक्तम् । क्रमप्राप्तमर्थग्रहणं तात्पर्यतो व्याचष्टे । अर्थ-
ग्रहणमिति । कस्मात्पुनर्निदिश्यते प्रमाणविषया प्रतिपत्तिरित्यत आह ।
यतो न प्रमाणविपर्ययेति । इतिकर्तव्यतानुष्ठानं तस्मिन् अर्थ्यत इत्यर्थस्तो
मकण्टकादि तथाभावे ऽर्थनीयत्वम् । तच्च सुखदुःखसाधनत्वम् । सुख-
साधनं ममुपादेयत्वेन दुःखसाधनं च हेयत्वेनार्थ्यते । तात्पर्यान्तरमाह ।
उपेक्षणीयेति । उपेक्षणीयविषये प्रमाणे प्रवृत्तिसामर्थ्यं नास्तीति तत्प्रति
षिध्यते । न च तत्प्रमाणमिति समर्थस्यापि* दृष्टप्रमाणसाधर्म्येण लिङ्गेन
प्रामाण्यानुमानादिति । चोदयति । प्रमाणाग्रहणमिति । समर्थप्रवृत्तिजनिका
हि प्रतिपत्तिर्यप्रमाणाद्भवतीति अर्थादेव प्रमाणादिति गम्यतइत्यर्थः ।
। ११ परिहरति । न प्रमाणविशेषज्ञापनार्थत्वात् । अयमभिसन्धिः ।
प्रवृत्तिसामर्थ्येन हि कार्येण प्रमाणस्यार्थवत्त्वमनुमातव्यम् । न चैतस्माद्यात्र

* समर्थस्येति क पु पा ।

प्रवृत्तिनिवृत्ती विषयतः तथापि भूतार्थपरोपनिषदादिशब्दव्यापकत्वात् पर-
प्रयोजनवद्वचनमात्रविवक्षयोपदेशपदं व्याख्येयम् । यद्यपि सदेव सोम्ये-
दमग्र आसीदित्यादि वचनं क्व चिन्न प्रवर्त्तयति कुतश्चिद्वा न निवर्त्तयति
पुरुषं तथापि पुरुषश्रेयोऽभिधत्त इत्युपदेश इत्युच्यते । तथाप्यतिव्याप्तिश्चै-
त्यवन्दनादिवाक्यानामप्येतल्लक्षणत्वादत उक्तमाप्तेति । आप्तानामृष्यार्य-
म्लेच्छानामुपदेशः शब्दो न त्वनाप्तानां मायामोहनिर्मितानां बुद्धर्षभादीनां
प्रमाणविरुद्धक्षणिकसर्वधर्मनैरात्म्यवादिनामिति । तदेवाह वार्त्तिककारः ।

। ६ न शब्दमात्रमिति सूत्रार्थः । सूत्रस्याप्तलक्षणपरं भाष्यम् । आप्तः खलु
साक्षात्कृतधर्मा । सुदृढेन प्रमाणेनावधारिताः साक्षात्कृता धर्माः पदार्था
हिताहितप्राप्तिपरिहारार्थाः येन स तथोक्तः । तथापि तत्त्वं विद्वानकारुणिकतया*
विपरीतोपदेशो निवारितः । चिख्यापयिषेत्यकृपाभ्यास†कारिते निराकृते
इति । प्रयुक्त उत्पादितप्रयत्न इत्यलसत्वम् । तथापि स्थानकरणपाटवाभावेन
वर्णनिष्पादनासामर्थ्येनाप्तः प्रसज्येतेत्यत आह उपदेष्टा । स्थानकरणपाटव-
वानित्यर्थः । आप्त इति प्रकृतिप्रत्ययसमुदायात् प्रकृतिं निष्कृष्य तदर्थमाह ।
साक्षात्करणमिति । अनेन चोक्तस्वरूपसंपदुपलक्षिता । प्रत्ययार्थमाह ।
तयेति । आप्तलक्षणस्य व्यापकत्वमाह ऋषीति । दर्शनादृषिः साक्षात्कृत-
धर्मान्यवृत्तिप्रमेयमात्रः । आराद्याताः पातकेभ्य इत्यार्या मध्यलोकः म्लेच्छाः
प्रसिद्धाः । म्लेच्छा अपि हि प्रतिपथमवस्थिताः पान्थानामपहृतसर्वस्वा मार्गा-
ख्याने हेतुदर्शनशून्या भवन्त्याप्ता इति । तदनेनाप्तदोषत्रयविद्राविणि परेषा-
माप्तलक्षणमव्यापकमुक्तं भवति । तदेतद्भाष्यमाक्षेप्तुमनुभाषते । आप्तः
खल्विति । आक्षिपति स्वर्गेति । आक्षेपभाष्यमाक्षिप्य सूत्रं समाधत्ते
आप्तः आप्तो युक्त इति यावत् । अपौरुषेयो वैदिक उपदेशः स्वर्गापूर्वदेव-
ताविषयः स्वतःप्रामाण्ये सिद्धे निर्दोषतया युक्त उपपन्नः लौकिकश्चार्य-
म्लेच्छानां प्रमाणान्तरमूलो युक्तः मानान्तराभावे तु नाप्तोऽयुक्त इत्यर्थः ।

। ११ समाधत्ते न ब्रूम इति । पौरुषेयत्वं वेदानां द्वितीयाध्याय उपपादयिष्यते ।
तस्मात्पुरुषस्यैवाप्तोपदेश इति साधु व्याख्यानं भाष्यकारीयमिति भावः ।

* अलसतया वा नुपदिशन् मत्सरितया वा विपरीतमुपदिशन् आप्तः स्यादित्यत आह । यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः । यथादृष्टस्येति मत्सरितया । सूत्रं शब्द २ पु० अधिक ।

† अकृपालत्वेति पु० पा० ।

पृच्छति कः पुनरिति । अस्ति स्वर्गादीनामप्रत्यक्षत्वे न्यायः योगिप्रत्यक्षं ६१ । १२
न स्वर्गादिविषयः प्रत्यक्षत्वादस्मदादिप्रत्यक्षवदिति भावः । उत्तरम् । ब्रूमो
न्यायम् । तमाह सामान्यविशेषवत्त्वात् कस्य चित् प्रत्यक्षता इति ।
अत्र यावति पक्षे यो हेतुः सिद्धस्तस्य तन्मात्रं पक्षीकार्यम् । योगत्वे च
प्रत्यक्षे सिद्धे तत्साधकादेव प्रमाणात्तस्य स्वर्गादिविषयत्वमपि सिद्धमिति
धर्मिग्राहकप्रमाणविरुद्धं मीमांसकानामनुमानं नोत्थातुमप्युत्सहते प्रागेव
तद्बाधितुम् असिद्धे तु योगत्वे प्रत्यक्षस्याश्रयासिद्धो हेत्वाभासः अस्माकं तु
सम्यक्षो बहवश्च न्याया इति भावः । अनित्यत्वं हेतुमाक्षिपति ।
असिद्धमिति । परिहरति नेति । नित्ये वापूर्वं इति । अत्र त्रयः कल्पाः
किमेकमपूर्वं सर्वपुरुषसाधारणमाहो असाधारणं यदा त्वसाधारणं तदापि
किं प्रतिपुरुषमेकैकमसाधारणमाहो प्रतिपुरुषमनेकमिति । तत्र प्रथमं कल्पं
दूषयति । यदि साधारणेति । न हि कदा चिदप्ययमपूर्वं पश्यति
लौकिकः पुरुषो योगिनस्त्वनभिव्यक्तमपि पश्यन्तीति भावः । द्वितीयं कल्पं
दूषयति । एतेन प्रतिपुरुषमिति । उत्कर्षे आधिक्यमपकर्षोपचय इति- ६२ ।
यावत् । यद्भूते व्यञ्जकेति । एकमपि व्यञ्जकभेदादुत्कर्षवन्निकर्षवद्दृष्टं यथा
महति दर्पणे महन्मुखं तदेव कनीनिकायामल्पमिति* । न दृष्ट इति ब्रूम इति ।
शङ्किता पृच्छति । किं पुनस्तत् । यदि न दृष्टं तद्यदि भेदेन तद्दृष्टं दृष्टिर्नास्ति
किम्पुनस्तदद्वैतेन भेददर्शनमिव भासते । समाधाता स्वाभिप्रायमाह ।
मिथ्या प्रत्यय इति । न भेददर्शनमपलपामहे किन्तु पारमार्थिकं भेदं न च
कल्पितोऽपूर्वभेदः पारमार्थिकाय कार्यायालमिति भावः । उत्कर्षापकर्षक-
र्तृत्वं कर्मण इति शेषः । तृतीयं कल्पमाशङ्कते । प्रतिपुरुषमनेकमिति ।
दूषयति अनिवृत्ता इति । अथोत्तरकालमिति । अश्वमेधक्रियया साध-
दपूर्वं स्वकाल एवाभिव्यक्तं फलदानाभिमुखीकृतम् अभिव्यञ्जकसमानकाल-
त्वादभिव्यक्तेः प्रदीपादिषु दर्शनात् । तथापि फलं तावन्न दत्ते यावत् क्रिया
न निवर्तेत निवृत्तायां तु फले दत्त इत्यर्थः । दूषयति असतीति । तत्खलु ६३
पूर्वे सदपि फले नाकार्षीत्तुरमभाविन्याः क्रियायास्तज्जन्याया वाभिव्यक्तेरनु-

---

* भावः । वक्ष्यमाणाभिप्रायेण निराकरोति । न दृष्टमिति । शङ्कितः स्वाभिप्रायमुद्घाट-
यति । ननु चेति । स्वाभिप्रायेण निराकरोति । अयं ग्रन्थः २ पु० अधिकः ।

त्वादाहुत्पन्नाया तु क्रियायामभिव्यक्तौ वा कस्मान्न करोति । न हि क्रियावि- नाशस्य क्व चिदुपयोगः । तस्मादसामेनापि त्वया सत्या एव क्रियाया व्यञ्ज- कत्वमनुग्राहकत्वं चाङ्गीकर्त्तव्य तच्चैतदुभयमपि चित्रमित्यर्थः । अपि च सा सती चेत्क्रियामभिव्यनक्ति तथा सत्यसमत्वाः सर्वत्र सुलभत्वान्न कि चिदपूर्वं नाभिव्यक्तमिति **क्रियाविलोपः** प्रयत्नविलोप इत्यर्थः । अत्र शब्द प्रमाणान्तरमसहमानो दिङ्नागस्तल्लक्षण विकल्प्य दूषयति । **आप्तोपदेश** इति । अन्यस्मादन्यस्य निश्चयो न तावदसम्बन्धादतिप्रसङ्गात् । न च शब्दो ऽर्थात्मना ऽप्यर्थकार्य विनाप्यर्थं पुरुषविवक्षामात्रादेव सद्भावादात् । तस्मान्न मात्राच्छब्दादर्थनिश्चयः विवक्षाकार्यतया तु विवक्षां गमयेत् । सा चार्थाभिप्रायपूर्वा अभिप्रायश्च कश्चिन्मनोमात्रयोनिरस्तु प्रमाणमूलः तत्र यः प्रमाणनिश्चितमर्थं विवक्षति यथाविवक्षमुच्चारयति स आप्तः तस्य वचनात् कार्यात्कारणं विवक्षानुमीयते तस्याश्च कारणमर्थज्ञानं ततश्चार्थ- ज्ञानस्यार्थकार्यत्वादिति प्रमाणगतिः । तत्राप्तोपदेश इत्यत्रोपदेशक्रियया उप- देष्टार उपस्थापितास्ते च प्रायेण विसंवादका दृष्टा इत्याप्तग्रहणेन तेषामविस वादित्वं ततश्चोपदेशादर्थनिश्चयो भवत्वित्येतदर्थं यदुच्यते इत्याह । **यथाप्तानामिति** । उपदेष्टृणामित्यर्थः । इम कल्पं दूषयति **तदनुमानात्** । अविसंवादित्वमुपदेष्टुरानुमानिकं तादृशस्य वचनमर्थनिश्चये अनुमानमेव । तथा हि । यदाप्तोदीरितत्वेन वचनं तत्सर्वमर्थवत् यथा बुद्धस्य क्षणिकने- रात्म्यादिविषय उपदेशः तथा चाय विवादाध्यासित उपदेश इति । यथोक्तं भदन्तेन आप्तवाक्याविसंवादसामान्यादनुमानतेति । द्वितीयं कल्पमाशिङ्कते । **अथार्थस्य तथाभावः** । अत्र हि उपदिश्यतइत्युपदेशो ऽर्थं उच्यतइति आप्तोपदेशो यस्मात्स तथोक्तः । एतदुक्तं भवति । यस्माच्छब्दादवग- म्यार्थे प्रवर्त्तमानः प्राप्नोति तमेवार्थं स आप्तोपदेशः शब्दः प्रमाणम् । एव शब्देन यो ऽर्थो दर्शितस्तस्याप्त्या तथाता दर्शिता तदिदमुक्तमर्थस्य **तथाभाव** इति । दूषयति **सो ऽपीति** । तदेव स्फुटयति **यदा हीति** । आप्त्या हि तथात्वं विनिश्चिन्वन् अर्थस्य नाप्रतिपन्नतया निश्चेतुमर्हति प्रति- पन्नश्च प्रायेण प्रत्यक्षेणेति प्रत्यक्षत इत्युक्तम् । तमिममाक्षेपमपाकरोति । । १० तमेनेति । नाप्रत्यक्षमयः शब्दोर्थं बोधयतीति सूत्रार्थः । नापि शब्दार्थप्राप्त्या

शब्दार्थतथात्वमिति । कस्तर्हीत्यत आह । अपि त्विति । इन्द्रियस- ६३ । १८
म्बद्धासम्बद्धेष्विति । दृष्टादृष्टेष्वित्यर्थः । यथोक्त स द्विविधो दृष्टादृष्टभे-
दादिति । एतदुक्तं भवति । आप्तत्वहेतुकमविसंवादित्वमनेन सूत्रेणागमार्थ-
तया प्रतिपाद्यते नाप्यर्थतथात्वमागमार्थतया प्रतिपाद्यते नाप्यागमः प्रत्यक्षा-
नुमानाभ्यां न भिद्यते । किन्तु उपदेशः शब्द इत्युक्तम् । उपदेश इति च
व्याख्यातं उपदिश्यते ज्ञाप्यते प्रयोजनवानर्थो ऽनेनेति । तथापि धार्मि-
कानुपदेशो ऽपि शब्दः स्यादित्यत उक्तम् आप्तेति । नोपदेशपदादे-
वागमस्य वाक्यार्थप्रतिपत्तिः फलमुक्तं तदिदमुक्तं या शब्दोल्लेखेन
पदार्थस्मरणाद्यन्तरव्यापाराच्छब्दादेवार्थं प्रत्येमीत्यनेनोल्लेखेन प्रतिपत्ति-
रागमार्थः फलमिति । आप्तत्वं चागमस्यार्थे प्रत्याययित्वा स्वस्याव्यभि-
चारित्वं न च यतः प्रामाण्यमवगम्यते ततः प्रमेयमपि । तथा च सति
प्रामाण्यज्ञानहेतोरनुमानादेव प्रत्यक्षादिप्रमेयावगतिरिति प्रत्यक्षादीनामप्रमा
ण्यप्रसङ्गः । तस्मिंश्चासति कस्यानुमानमपि प्रामाण्यमवधारयेत् । न चाप्र-
माणं कार्यं स्वरूपज्ञानानुमानद्वारेणार्थे ऽप्यनुमानमेव स्वार्थस्य प्रत्यायक-
मिति साम्प्रतम् । यदि हि नार्थे प्रत्याययेज्ज्ञानमात्रमनुमापयेत् । तथा
च नार्थविशेषसिद्धिः । न च ज्ञानस्यार्थादन्यो ऽस्ति कश्चिद्विशेषः तस्मा-
दनुमानविशेषणाय सूत्रे शब्दादेव केवलाद्वाक्यार्थज्ञानमिति न्याय्यम् । एतत्तु

यस्यामुत्र प्रतीयते सोऽदृष्टार्थ इति। अदृष्टार्थोऽपि प्रमाणमर्थस्या-
नुमानादिति। न दृष्टार्थो यस्यागमस्य स तथा एवमितरोऽपीति। तदेव
। १ भाष्यमतेन व्याख्याय स्वमतेन व्याचष्टे वक्तृभेदेनेति। दृष्टोऽर्थो येन स
दृष्टार्थः प्रवक्ता एवमदृष्टोऽनुमितोऽर्थो येन स तथा ऋषयोऽस्मदादयश्च।
अनुमितार्था अस्मदादय एवेति। एवमपि शब्दद्वैविध्यं साधने मा
भूदपक्षधर्मतेति प्रवक्तृपदेन पूरयति दृष्टादृष्टार्थप्रवक्तृकत्वादिति।
अदृष्टार्थः प्रवक्ता यस्यागमस्य स तथोक्तः। अस्यार्थे सविग्रहं करोति।
प्रत्यक्षेण इति। शेषं सुबोधम्। न सामान्यतोदृष्टानां वाक्यानां प्रामाण्यम्।
स इति विप्रकृष्टो नास्तिकः परामृष्यतइति भाष्ययोजनिका। परिशिष्टं तु
परीक्षापर्वणि निवेदयिष्यते॥

## इति प्रमाणटीका।

इह प्रमेयं हेयोपादेयभावेनावस्थितं मुमुक्षुणा प्रतिपित्सितं तच्च
परीक्षितस्वप्रमाणविशेषाधीनप्रतिपत्ति लक्षणं चास्य प्रमाणविशेषः। न चासा-
न्तरप्रमाणसामान्यप्रत्यक्षादिलक्षणमन्तरेणात्मादिप्रमाणावतारः कर्तुं शक्यः।
तस्य प्रत्यक्षादिसामान्यविशेषत्वादतः प्रत्यक्षादिलक्षणानन्तरं तदवतारः।
अपरीक्षितं च न तत्त्वनिर्णयाय पर्य्याप्नोतीति परीक्षा विधास्यते।
तत्परिकरश्च संशयादय इति युक्तं तेषां पश्चाल्लक्षणम्। तदिह प्रमेय-
लक्षणाय तद्विभागोद्देशसूत्रमवतारयितुं भाष्यकारः पृच्छति स्म। किं पुन-
रनेन प्रमाणेनेति। जात्यभिप्रायमेकवचनं प्रकृते प्रमेये यथायथं प्रमाणा-
नामुपयोगात् तदेतद्भाष्यमनूद्य वार्त्तिककार आक्षिपति। किं पुनरिति।
प्रमेयनान्तरीयकत्वं प्रमाणानां सामर्थ्यम्। समाधत्ते नेति। प्रत्यक्षा-
दिलक्षणसामर्थ्यात् प्रमेयमात्रं सिद्धं विशिष्टं तु प्रमेयमद्यापि न सिध्यतीति
तदर्थं प्रश्नः। स च विशेषो यथावदिति न दर्शित इति अयमेव च
सूत्रार्थ इति। येषां तत्त्वज्ञानात*त्त्वज्ञानाभ्यामपवर्गसंसारौ भवतस्ता-
वतएव न न्यूना नाधिका इत्यर्थः। *प्रथमसूत्रव्याख्यायामतिदिशति*।
। १३ यत्रापीति। उक्तमर्थमनाकलय्याक्षिपति। उभयोरिति। दिगादीनामिति।

* ज्ञानाज्ञानाभ्यामिति १ गुणाभ्यामिति २ पु० पा०।
‡ तत्र तावत्त एव १ त एव २ पु० पा०।

द्रव्येषु दिक्कालपरिमाणूनामनभिधानात् । वृक्षास्तिष्ठन्तीति । इतिशब्द आद्यर्थे ६५ । २
तेन वृक्षं पश्यति वृक्षेण चन्द्रमसं पश्यतीत्यादयो बोद्धव्याः । समाधत्ते ।
न सूत्रार्थापरिज्ञानादिति । न प्रमेयपदं प्रमेयमात्रे वर्तते किं तु यत-
स्यतो ज्ञायमानमपवर्गसाधनं तस्मिन् तच्चात्मादेव नान्यदिति युक्तो
ऽन्ययोगव्यवच्छेद इत्यर्थः । अयोगव्यवच्छेदे ऽपि न दोष इत्याह ।
प्रमेयमेवेति । नन्वस्मिन्पक्षे न कदाचिदपि प्रमाणता स्यादित्यस्ति दोष
इत्यत आह । किमुक्तं भवतीति । नास्य पुरुषमात्रं प्रति प्रमेयत्वं विधी-
यते अपि तु मोक्षमाणशिष्यं प्रति विधीयते । अनूद्यत इति । प्रमाणान्तर-
मूलकत्वेन विधानदार्ढ्यं दर्शयति । उपसंहरति । तस्मादिति । कौशलमा-
त्मात्मनः ख्यापयितुमभ्युपेत्य समाधानान्तरमाह । उपेत्येति । प्रवृत्तिसं-
स्कारकत्वमस्ति दिक्कालयोः प्राङ्मुखो ऽन्नानि भुञ्जीत प्राचीनप्रवणे वैश्वदेवेन
यजेत पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेतेति
श्रवणात् । कौशलमात्रमिदं न तु समाधानमित्याह । न पुनरिदमिति ।
विहितविधानादिति । प्रमाणविधानसामर्थ्येन विहितमित्यर्थः । न केवलं
प्रमाणविधानाद्विहितमपि स्यादनुपचरात्प्रमेयपदादपि लब्धमित्याह । आर्येन
चेति । एतस्मिन्नर्थे सूत्रकारस्यानुमतिमाह । एवं चार्थमिति । भाष्यम्
सर्वस्य सुखदुःखसाधनस्य द्रष्टा सर्वस्य सुखदुःखस्य भोक्ता यतः सुख-
दुःखसाधनं सर्वं सर्वं च सुखदुःखं जानाति अतः सर्वज्ञः न चाप्राप्ता-
न्येव जानातीत्यत आह सर्वानुभावी । अनुभवः प्राप्तिः तदेतद्वैरा-
ग्याद्यपेक्षमेवमनुसरणादि बोद्धव्यम् । आत्मन्यत्र विशेषो यदनेन रूपेण
हेयः केवलेन चोपादेयः शरीरादीनि तु हेयान्येव अपवर्ग उपादेय एवेति ।
अविद्यमानं पूर्वं शरीरं यस्य तदपूर्वं शरीरं तन्निषेधति नास्येदमिति ।
प्रमेयत्वमविदुष आत्मनः अविद्यमानमुत्तरं शरीरं यस्य तदनुत्तरं तदपि
निषिद्धं चेत्यनुकर्षणात् । ननु यथा पूर्वेषां शरीराणामनादित्वेऽप्युत्त-
रेषामप्यनन्तता तथा च मोक्षमाणानां प्रवृत्तयः तदर्थानि शास्त्राणि
चानर्थकानि प्रसज्येरन्नित्यत आह । उत्तरेषामिति । प्रमेयानन्त्यप्रमादि-
त्यर्थः । ननु सुखे ऽप्युद्दिष्टे दुःखमादिष्टं किं पुनः प्रत्यस्ते तथा
चानुभवविरोध इत्यत आह । नेदमिति । तदेतद्वाक्य वार्त्तिककार आचे-

पश्चमाधानाभ्यां व्याचष्टे । **सुखं पुनरिति** । न चान्यत आत्मादिपदादु-
पर्यन्ति । अस्मदादेवात्मादिभ्यो भेदेन प्रत्यात्ममुपलभ्यमानत्वादेव निर्वि-
३ दानमित्यस्य व्याख्यानम् **अनभिरतिसंज्ञेति**। उपेक्षाबुद्धिः । **निर्विण्णस्य
वैराग्यमि**त्यस्य व्याख्यानं **तां चोपासीनस्य** तयैव विरोधिगुणेन तृष्णा
विच्छिद्यते सुखानभिधानेन दुःखपक्षनिक्षेपं सूचयति । तथा च सुखे* ऽस्य
वैराग्यं भवतीति तात्पर्य्यार्थः । अपवर्गस्यात्मार्थत्वेन प्रमेयेष्वात्मनः प्राधान्या-
त्प्रथममात्मलक्षणमुपचिक्षिप्सुरित्यादि तदवतारार्थं भाष्यं **तत्रात्मेति**। अहमिति
ज्ञानं गौराद्याकारं शरीरावभासं न शक्यं घटादिज्ञानवद् द्रागात्मनि प्रमा-
णयितुमित्यभिप्रायः. परदेहवर्त्त्यात्माभिप्रायं वा । तदेव वार्त्तिककारः सूचना-
त्पर्यमाह । **समानेति** । समानजातीयं शरीरादि असमानजातीयं प्रमाण-
वयवादि । सत्येवास्मिन् प्रयोजने प्रयोजनान्तरमन्वाचिनोति । **आगमस्येति**।
ततश्चाप्तोक्तत्वानुमानसिद्धमपि प्रामाण्यं शब्दस्यानेन तदर्थसंवादकेनानुमा-
नेन दृढतरं भवतीत्यर्थः । प्रयोजनान्तरं चान्वाचिनोति । **प्रमाणसंप्लव-
स्येति**। द्वावपि चाशब्दौ चार्थे ऽन्वाचये द्रष्टव्यौ। तदनेन वार्त्तिकेनानुमानाद्
**प्रतिपत्तव्य** इति भाष्यं व्याख्यातम् । इच्छादय आत्मलिङ्गमित्येतत्कथनपरं भाष्यं
**यज्जातीयस्येति**। यज्जातीयस्येति व्याप्तिस्मृतिकथनं तज्जातीयं पश्यन्निति
पक्षधर्म्मताकथनं । तस्मादयं सुखहेतुरित्यनुमायादातुमिच्छति सेयमिच्छैकदर्शी
व्याप्तिग्रहणतत्स्मरणपक्षधर्म्मताग्रहणानुमानेच्छादीनामेककर्तृकत्वं सूचयति ।
भेदे प्रतिसन्धानाभावेन तदनुपपत्ते । **तदिदमुक्तमेकस्येति** । यश्चासावेको
ऽनुभविता च स्मर्त्ता चानुमाता वेदिता च स आत्मा न च शरीरमेवं
भवितुमर्हति तस्य बाल्यकौमारयौवनवार्द्धकभेदेनान्यत्वात् । नेन्द्रियम् इन्द्रि-
यान्तरगृहीते इन्द्रियान्तरेणाप्रतिसन्धानप्रसङ्गात् । यमहमद्राक्षं तं स्पृशा-
मीति । नापि मनस्तस्य करणत्वेनैवानुमानात् । वक्ष्यति ह्येतत्सर्वं ज्ञातु-
र्ज्ञानसाधनोपपत्तेरित्यत्र सूत्रे ।

स्यादेतत् । असत्यप्यात्मनि ज्ञातरि सत्यपि च बुद्ध्यादीनां भेदे
तत्सन्तानाभेदेन प्रतिसन्धानव्यवस्थोपपत्स्यत इत्यत आह । **नियतविषये**

---

* सुखस्य त १ पु पा ।

† मर्यातमधात्मादिति २ पु पा ।

इति । नियतविषयाणि बुद्धिभेदस्य प्रतिसन्धानमपाकरोति । साध्यहेतोन
च सन्तानसन्तानिव्यतिरिक्तमपाकरोति तदभ्युपगमे वा स एवात्मेति सिद्धं नः
समीहितम् । तदेतद्भाष्यमनुमोद्य वार्तिककारस्तात्पर्यमस्याह । यज्ञाती- ६६ । १६
यस्येति । तत्र विचारमारभते । तत्रेति । पूर्वपक्षमाह । कथमिच्छादीति ।
परिहरति । स्मृत्येति । नन्वेकविषयाणां स्मृत्यादीनां नानाकर्तृकत्वे को
विरोध इत्यत आह । न हीति । नानाविषयत्व उदाहरणमाह । न हि
रूपे इति । नानानिमित्तत्व उदाहरणमाह । नापि भवतीति । यथास्मान्निमि-
त्तादिन्द्रियात् स्पर्शमहमस्प्राक्षं ततस्मान्निमित्ताद्रूपं पश्यामीति ।
नानाकर्तृकत्व उदाहरणमाह । न हि भवति देवदत्त इति । तदेतत्किल
प्रतिसन्धानं कर्तृभेदाद्देवदत्तयज्ञदत्तादिव्यतिरेकवत्त्वेनैककर्तृकत्वं साधयतीत्युक्तं
तदेतदनुपपन्नं भिन्नकर्तृकाद्व्यतिरेकस्योपाधिसम्भवेन स्वाभाविकप्रतिबन्धस्यान-
वधृतत्वात् । अस्ति हि देवदत्तयज्ञदत्तविज्ञानानां भिन्नकर्तृकत्वमकार्यकारणभा-
वश्च तत्र किमकार्यकारणभावात् प्रतिसंधानस्य व्यतिरेक उत भिन्नकर्तृकत्वा-
दिति संदिग्धव्यतिरेकत्वादसाधनाङ्गं प्रतिसंधानमित्याशयवांश्चोदयति कार्य-
कारणभावादिति । तदिदमुक्तम् । तदिदं प्रतिसंधानमन्यथा भवदिति ।
गूढाभिप्रायः परिहरति नानात्वस्येति । चोदक आह अकार्यमिति । गूढाभि-
प्राय एव परिहारवाद्याह । तदयुक्तमिति । अनैकान्तिकत्वं संदिग्धव्यतिरे-
किता । चोदक आह । तुल्यं भवतो ऽपीति । सिद्धान्ती गूढाभिप्राय
एवाह । अभ्युपगमादिति । चोदक आह । नासाधनादिति । असिद्धा-
र्थता ऽन्यथासिद्धार्थता हेतोर्हेतुवचनस्येत्यर्थः । सम्प्रति समाधानाभिप्राय-
माविष्करोति । न हेत्वर्थापरिज्ञानात् । तदेतद्विभजते । न भवतेति । कः
पुनरसौ हेतुविशेष इत्यत आह । विशेषितं चैतत्प्रतिसंधानं तत्कथयति
स्मृत्या सह पूर्वापरप्रत्यययोरेकविषयत्वं प्रतिसंधानं यज्जातीयं सुखहे-
तुमन्वभवमित्यादि सुखहेतु प्रतीतः स्मरामि तज्जातीयमिदं पश्यामीति प्रति-
संधानम् । तदनेन शालिबीजाङ्कुरस्य परंपरया शालिबीजान्तरजननवदप्र-
तिसंधानात्कार्यकारणभावनियमाद्व्यवच्छिनत्ति । नन्वियं पूर्वापरप्रत्ययसंहतिः
स्मृतिरपि कार्यकारणभावादेवोपपत्स्यते कृतमेकेन कर्त्रेत्यत आह सा च
क्षणिकत्वपक्षे ऽनुपपन्ना । पृच्छति कस्मात् । उत्तरम् अन्वयेन । निमि- ६८

१५ तेनानुभूतस्य अन्येन निमित्तेनास्मरणात् । न हि भवति येनैव चक्षुषा घटमद्राक्ष तेनैव त्वगिन्द्रियेण तं स्पृशामीति । निमित्तभेदे प्रतिसंधानाभावमुक्त्वा विषयभेदे ऽप्याह । न ह्यन्येन स्वभावेन घटत्वादिना ऽनुभूतस्यान्येन वृक्षत्वादिना स्मरणं न हि भवति यमहं घटमद्राक्ष सो ऽयं वृक्ष इति । कर्तृभेदे प्रतिसंधानाभावमाह । न ह्यन्येन देवदत्तेनानुभूतमन्यो यज्ञदत्तः स्मरति । न हि भवति यो ऽहं देवदत्तो ऽद्राक्ष सो ऽहं यज्ञदत्तः स्मरामीति । न चेदं सत्यपि भेदे कार्य्यकारणभावात्प्रतिसंधानं भवितुमर्हति न हि यत्र स्फुटतरः कार्य्यकारणभावः तन्तुपटयोर्घटकपालयोर्वा दृश्यते तत्र प्रतिसंधानं भवति ये तन्तवः स एव पट इति या वा घटक्षणः स एव कपालक्षण इति वा । वस्तुतः कार्य्यकारणभूतानामगृहीतभेदानां प्रतिसंधानहेतुभावः सभागेषु क्षणेषु तथा दर्शनादिति चेतन्न । आमलकफलस्यैकस्यापनये तत्रैव स्थाने आमलकान्तरस्थापने भवति प्रतिसंधानं न च तयोरामलकयोरस्ति कार्य्यकारणभावः । पूर्वापरप्रत्यययोः स्मृत्या सहैकविषयत्वं कर्त्तरि कार्य्यकारणभावनिबन्धनं न कर्मणीति चेत् । हन्त नैरात्म्यसाक्षात्कारसात्मीभावे ऽप्यस्ति विज्ञानानां कार्य्यकारणभाव इति तन्निबन्धनं प्रतिसंधानं पूर्ववदेव प्रसज्येत । सैव चात्मदृष्टिर्दोषाणां निदानं परममिति व्यर्थो नैरात्म्यसाक्षात्कारसात्मीभावप्रयासः । अथासदपि प्रतिसंधानं कार्य्यवशादाह, तथागतो नट इव रामत्वमात्मनः यदि तत्कार्य्यकारणभावनिबन्धनं कथमसत्कार्य्यं कथमाहार्य्यम् । अथ कार्य्यकारणभावो ऽप्यवस्तुसन् कल्पनामात्रनिबन्धनः स तर्हि तादृशः शालिबीजस्योत्पादं वास्तवं न नियन्तुमर्हति । न जातु कल्पितवह्निभावो माणवको दहनपाकयोरुपयुज्यते । न च प्रत्ययानां भेदाग्रहात् प्रतिसंधानमिति साम्प्रतम् । प्रवृत्तिविज्ञानानां रूपादिविषयाणां भेदेन पृथग्जनैरपि प्रतीयमानत्वात् । आलयविज्ञानस्य च प्रवृत्तिविज्ञानातिरिक्तस्यानुपलब्धेः । अहमिति च सत्वदृष्टेः क्षणिकत्वनिराकृतावसति बाधके स्थिरवस्तुविषयत्वात् । तस्मात् स्मृत्या सह पूर्वापरप्रत्यययोरेकविषयत्वलक्षणस्य प्रतिसंधानस्यानेककर्तृकत्वाद् व्यतिरेको निरुपाधिरेककर्तृकत्वं साधयति स चैकः कर्त्ता शरीरेन्द्रियबुद्धिभ्यो भिन्न आत्मेति सिद्धम् । तदनेनाशयेन

१६ नोक्तम् अस्ति च स्मृतिरुक्तरूपा । तस्मादस्मिन्पक्षे स्मृतिः सम्भवति ।

तत्र प्रतिसन्धानं न्याय्यमिति । स च कर्तृकत्वपक्ष इति भावः । भाष्य- ६८ । १८
यस्यविद्वान् पुनः परः प्रत्यवतिष्ठते । भवानिति । पर एकैकपन्थेनाह ।
कथमिति । कथं न सम्भवतीत्यर्थः । स्यादेतत् । योगिचित्तमपि सर्वज्ञस्य
चेतस आलम्बनप्रत्यय इति तस्यापि योगिचित्तेन प्रतिसन्धानं स्यादित्यत आह ।
परकायेति । एतदुक्तं भवति । उपादानोपादेयभावेनावस्थितः चित्तप्रवाहः
सन्तानः न च योगिचित्तमुपादानं सर्वज्ञस्य चेतसः आलम्बनप्रत्ययो हि
सदिति । कायग्रहणं च एकसन्तानोपलक्षणपरं तेन जन्मान्तरेऽपि स्मृतिरुप-
पन्नेति । तदिममस्मदभिप्रायानभिज्ञं परमन्यथापि बोधयितुं विभ्रमाम इति
सिद्धान्त्यन्यथा स्मृत्यनुपपत्तिमाह । **नास्थिरत्वात् बुद्धीनाम्** । न ह्यज्ञा-
तान्वयव्यवस्थयोरस्ति कश्चिद् विशेष इति पूर्वोत्पन्नोऽनुभवः का पुन
वासनामाधाय प्रध्वंसते यया कालान्तरे स्मृतिराधीयत इत्यभ्युपगन्तव्यम् । न
चास्थिरा बुद्धिः शक्या वासयितुम् इत्यात्मा स्थिरोऽभ्युपेय इत्यर्थः । युक्त्य-
न्तरमाह । **असंबन्धाच्चेति** । न च बुद्धीनामसमानकालानामस्ति सम्बन्ध
इत्यर्थः । पुनः परः प्रत्यवतिष्ठते । **शक्तीति** । नास्माकं क्षणिकवस्तुवादिना-
मस्ति तज्जगति यदवस्थितं वासकेन वास्यमानं दृष्टमिति भावः । ननु तथा
ऽप्यसमानकालतया संबन्धरहितमशक्यं वासयितुमिति सहवासवाक्यविवरण-
व्याजेनापाकरोति । **यथापीति** । पूर्वचित्तं प्रवृत्तिविज्ञानं यतस्तु षड्विधं चक्षुरू-
पादिज्ञानान्यविकल्पकानि षष्ठं च विकल्पविज्ञानं तेन सह चातः समानकालः
चैतन्याविशेषस्तदालयविज्ञानमित्युच्यते । अहङ्कारास्पदं स्मृतिशक्तिः सा च न
तस्मात्प्रधानादतिरिच्यते तेन कथं विद्वेदविषयया शक्तिविशिष्टमित्युच्यते ।
सिद्धान्तवादाह । **यथोक्तमिति** । उपपादयिष्यते हि भावानां सर्वक्षणप्रसंगि-
भिन्ना स्थिरता क्षणभङ्गनिराकरणेन तथा च स्थिरस्य संघट्टस्य च वस्त्रा-
देर्मृगमदादिना वास्यत्वं दृष्टमिति नास्थिरेऽसंघट्टे च वासयितुमर्हतीत्यर्थः ।

स्यादेतत् । अस्थिरयोरपि ज्ञानयोः समानकालतयाऽस्ति सम्बन्ध
इति कस्मादन्यतरचित्तवासितमन्यतरस्मिन् स्मृतिं नाधत्त इत्यत आह ।
पश्चात्तावेति । पश्चाद्भावापेक्षोऽपिशब्दः । ननु वर्तमाने चेतसि मा
कार्षीदुपकारम् अनागते तु करिष्यतीत्यत आह । नापीति । पृच्छति ।
कथमिति । इतरं वर्तमानं तावदिति । प्रकृतमुपपादयति तस्मादिति ।

इतो ऽप्यसत्यात्मनि विज्ञानमात्रात्कार्य्यकारणभावात्स्मृतिर्नोत्पद्यत इत्याह इतरथेति । कस्माद्भावस्य भवितृपेक्षत्वात् । भाव उत्पत्तिमान् धर्म्मः भविता धर्म्मी पाको विक्लित्तिः संयोगभेदः स च तण्डुलावयवसमवेतो ऽप्यवयवावयविनोरभेदोपचारात्तण्डुलानामित्युक्तम् । गतिः परिस्पन्दो देवदत्ते कर्त्तरीति सिद्धान्ती क्षणिकतावादिनमुत्थाप्याक्षणिकत्वाभिप्रायेण दूषयति । अनाधारे चेति । पूर्व्वपक्षी क्षणिकत्वाभिप्रायेणाह । कार्य्येति । सिद्धान्तवादी क्षणिकत्वाभिप्रायेण परिहरति । तच्च नेति । समानकालयोराधाराधेयभावो दृष्टो यथा कुण्डबदरयोः । स्थिरमेव हि कुण्डं स्थिरस्यैव बदरस्य गुरुत्वेन पततो गुरुत्वं प्रतिबध्नदधःपतनं निरुन्धदाधारो भवति । यदुच्येत न स्मृतिर्भावः किं तु भविता उत्पत्तिरस्या भावः न तु भवितुर्भवित्रन्तरापेक्षा युक्ता ऽनवस्थापातादिति शङ्कते अथापीदमिति । निराकरोति । तच्च नेति । विरोधादिति विवृणोति । यदीति । कस्माद्व्याहतमित्यत आह । स्वरूपं चेति । चो हेत्वर्थे स्वरूपमुपलिह्यमानं स्वतन्त्रं बाधते यतस्तस्माद्विरोध इत्यर्थः । अनभ्युपगमादिति विवृणोति न हि भवन्त इति । विरोधादिति स्फोरयति । व्यतिरिक्तं चेति । तत्त्वं चास्त्वम् । शङ्कते अथेति । तथा च न विरोधो नाप्यनभ्युपगम इत्यर्थः । निराकरोति किं कृतेति । अभिधानस्वरूपमाह । उत्पत्तिरिति । अपि चोत्पत्तेर्भावत्वे ऽपि न स्मृतिर्न भावः भावत्वस्य कार्य्यमात्रानुबन्धित्वात् स्मृतेश्च कार्य्यत्वात् । न चानवस्था नित्ये व्यवस्थानात् तथा च स्मृतेर्भावस्य भविता ऽऽत्मैव नित्यः परिशिष्यत इत्याशयवानाह । यदा चोत्पत्तिरिति । प्रकृतमुपसंहरति । तस्मादिति । तत् सिद्धमेतत् स्मृतिः पूर्व्वापरप्रत्ययाभ्यामेककर्त्तृका उभाभ्यां सहैकविषयत्वेन प्रतिसन्धीयमानत्वात् । या पुनर्नाभ्यामेककर्त्तृका सा न तथा प्रतिसन्धीयते यथा देवदत्तस्य स्मृतिर्यज्ञदत्तप्रत्ययाभ्यां न चेयं न तथा तस्मान्नथेति । तदेव व्यतिरेकिसमर्थनं कृत्वा ऽन्वयव्यतिरेकिणमर्थं प्रमाणयति अथ चेति । अनेकद्रव्यमनेकनिमित्तः प्रतिषेधशङ्कानिरासार्थं येन प्रागनुभूता रूपादयस्तेनैव गन्ध उपलभ्यत इति प्रत्यु मयेति स्मृत्या मम प्रतिसंधानं तस्माद्रूपरसाभ्यामेवाभिन्नाश्रये ये कृतसङ्केतास्तेषां यद्योक्तं परैर्नैतत्कौतूहलनतो वेष्टो न लोकः पारमार्थिकः । परमाणुसमूहस्या- १९८ दैकत्वं तस्य कल्पितमिति तत्राह । प्रचयस्य एकत्वात् । न भूः परमा-

वृक्षसमूहो ऽपि स्थगयति द्रव्यमेकं तद्वत्त च रेचितमपि क्रियैकैव । यस्तु वा
परमाणुसमूह एव मूर्त्तैरपस्तथा ऽपि समूहस्य समूहिभ्यो ऽनन्यत्वात् परमाणव
एव तेषां च प्रत्येकमेकता अनेकभरसमत्तनिपुणप्रतिपत्तृसाधारणता च । अस्ति
च तेषामपि स्वगोचरा विकल्पोत्पादनपरंपरया मयेतिप्रतिसंधानहेतुभाव इति
यत्किंचिदेकत्वं तस्य कल्पितमिति । तदेव प्रतिसंधानद्वारेणेच्छादीनामात्म-
लिङ्गत्वमुक्त्वा सम्प्रति गुणतया लिङ्गतां वार्त्तिककृदाह अथ चेति । गुणत्वेने- १० । १
च्छादीनां पारतन्त्र्य रूपादिवत्साधनीयं तच्चानित्यत्वेनैव सामान्यविशेषस-
मवायेभ्यो व्यावर्त्तकेन सिद्धं न ह्यनित्यो भावो द्रव्यात्स्वतन्त्रो भवति ।
तस्माद्गुणत्वसाधकादेव हेतोः पारतन्त्र्यसिद्धेः कृतं गुणत्वेन पारतन्त्र्यसा-
धकेनेति हृदि निधाय वार्त्तिककारस्तदपि पूर्वमुक्तमिति सिद्धेन पारत-
न्त्र्येण गुणत्वमपि साधयति । न चैतदनित्यस्य पारतन्त्र्यं द्रव्येण सिद्धमिति
द्रव्यकर्म्मणोरप्यनित्ययोः पारतन्त्र्यात् । तस्मादनित्यत्वसिद्धेन द्रव्यपारत-
न्त्र्येण द्रव्यकर्म्मभ्यां विशेषयति न द्रव्यं कर्म्म चेच्छादयः । व्यापकद्रव्यस-
मवायात् शब्दवदित्यादि यद्यप्यनित्यत्वेन द्रव्यसमवायमात्रं सिद्धमिति तथा
ऽपि द्रव्यकल्पनमपेक्षितेत्यपरतो तदवयवकल्पनायां प्रमाणाभावेन तद् द्रव्य-
मनवयवं तावत्सिद्धम् । अनवयवद्रव्यं द्वेधा व्यापकमणु च । न तावदणु तत्र
तत्रेच्छादीनामुपलब्धेः । क्वचिदन्यतरकर्म्मणा क्वचित्स्वभावतस्तत्संयोगोप-
पत्तेः तद्भूतिकल्पनायां प्रमाणाभावात् सिद्धमस्य व्यापकत्वं तदेतच्छब्दादिपक्ष-
व्याख्यानम् । तदनया पक्षतया नित्यत्वं परममहत्त्वं चात्मनो दर्शि-
तमिति । यत्तु सामान्यतोदृष्टमनुमानं सूचयता पूर्वं वर्णितमित्याह सा-
मान्यत इति । यत्पूर्वं हृदि निहितमिच्छादीनां पारतन्त्र्ये साध्ये ऽनित्यत्वहे-
तुकानुमानं तदुद्घाटयति । कार्य्यत्वमपि हेतुः सद्भिर्नीतिः एतेनेति । नन्वस्तु
द्रव्यपारतन्त्र्यं तथा ऽपि शरीरपारतन्त्र्यमस्तु कृतमनुपलभ्यमानेनात्मनेत्यत
आह । अशरीरादिति । सर्वपुरुषसाधारणप्रत्यक्षाश्च न पृथिव्यादिगुणाः तदु-
त्पत्तौ कारणत्वेन कल्पनाच्च नाकर्त्तुर्मनसः तस्मादष्टद्रव्याश्रितेभ्यो द्रव्यान्तर-
तन्त्रेच्छादयः स साध्नोति सिद्धमित्याह तत्प्रतिषेधादिति । आत्मानं लक्ष- ११
यित्वा ऽऽत्मनो दुःखनिदानतामिन्द्रियादीनां सर्वेषां साक्षात्पारम्पर्येण शरी-
रमाश्रित्य तन्निदानत्वमिति तदेवास्य दुःखमूलकत्वादनन्तरं शरीरं

लक्षयितुं सूत्रं चेष्टेत्यादि। तदवतारायं भाष्यं तस्येति। तस्येत्यात्मानं परा-
मृशति। भोगः सुखदुःखसंवित् तदधिष्ठानं शरीरं तदनेन सर्वस्यास्यानर्थप्र-
भारस्य परमनिदानं शरीरमतस्तदेवेन्द्रियादिभ्यः पूर्वं लक्षणीयमित्युक्तम्।
अत्र चेष्टाश्रयत्वेनेन्द्रियाश्रयत्वेनार्थाश्रयत्वेन च प्रत्येकं समानजातीयेभ्य आ-
त्मेन्द्रियादिभ्योऽसमानजातीयेभ्यः प्रमाणप्रमेयादिभ्यः शरीरं व्यवच्छिद्यते।
कथं चेष्टाश्रय इति भाष्यं तस्यार्थं व्याचष्टे का पुनरिति। चेष्टा व्यापारः स
चातिव्यापकतया अव्यापकतया च न लक्षणं वृक्षादिषु भावात् अभावाच्च
पाषाणमध्यवर्त्तिमण्डूकादिशरीरेष्विति भावः। अथोत्तरभाष्यम् ईप्सितमि-
त्यादि। तद्व्याचष्टे। हिताहितेति। प्रयुक्तस्योत्पादितप्रयत्नस्य न व्यापारमात्रं
चेष्टा ऽभिमता ऽपि तु विशिष्टो व्यापारः स च न वृक्षादिष्वस्तीति नातिव्या-
पकता। यद्यपि च दारुयन्त्रादिष्वीदृशो व्यापारो ऽस्ति तथापि मूर्त्तान्तराप्रयोगे
सतीति विशेषणान्न व्यभिचारः तेषां शरीरे मूर्त्तेन प्रयोगात्। शरीरस्य मूर्त्ता-
न्तराप्रयुक्तस्य ईदृशव्यापाराश्रयत्वं पाषाणमध्यवर्त्तिनश्च मण्डूकदेहस्य तद्व्या-
पारायोगे ऽपि तद्योग्यत्वात् पाटिते पाषाणे तादृशस्य तद्व्यापारस्य दर्शनादिति
भावः। कथमिन्द्रियाश्रय इति भाष्यं व्याचष्टे कथमिति। संयोगितया
त्विन्द्रियाश्रयत्वे घटादीनामपि शरीरत्वप्रसङ्गस्तेषामपीन्द्रियसंयोगित्वादिति
भावः। यस्येत्यादिपरिहारभाष्यं व्याचष्टे शरीरेति। एतेनेति। तदवृत्तित्वे-
नानुपपत्त्या ऽर्थानामप्यन्यादृश आश्रयार्थो व्याख्येयः। यद्यपि गन्धादयो विषया
न स्वरूपेण शरीरमाश्रयन्ते तथा ऽपि यत्तेषां सुखाद्युपलम्भहेतुत्वं कार्य्यं प्रयो-
जनं तदर्थमाश्रयन्तीत्यर्थः। तदनेन यस्मिन्नित्यादिभाष्यं व्याख्यातम्। चोद-
यति कथं पुनरिति। परिहरति सामान्येति। विशेषेण बुभुत्सितत्वादिना
प्रकरणापन्नं नियन्त्रितं सामर्थ्यं प्रकरणादीत्यादिपद*संगृहीतमपरमपि साम-
र्थ्यशब्दार्थमाह। सामर्थ्यं चेति। अपरमप्याह। प्रमाणेति। अत्र प्रथमे पक्षे
चेष्टाशब्दो व्यापारविशेषे स्पन्दादिषु मुख्यार्थः तदेतल्लोकस्तावदित्यादिना
तथा चायं चेष्टाशब्द इत्यन्तेन दर्शितम्। प्रमाणासंभवो वेति। द्वितीयं
१६ पक्षं विवृणोति। सामान्यवाच्यपीति। अनभ्युपगमे प्रमाणासंभवो ऽनुप-
पत्तिः सा तु न क्रियमाणे इत्यनेन दर्शिता। तत्र चेष्टापदव्याख्यानेन घटा

* कादिकदर्शनि १। २ पु पाठः।

दिषु न शरीरत्वप्रसङ्गः । एवं भाष्यानुसारेण स्वमतेन प्रत्येकं चेष्टाश्रयत्वा-
दि शरीरलक्षणं वर्णयित्वा समस्तमेवेदं शरीरलक्षणमिति ये वर्णयन्ति तन्म-
तमपाकरोति । यैरपीति । यद्यप्येवं लक्षणं चेष्टाश्रय इति तदा घटेन १२ । ८
व्यभिचारः तदर्थं द्वितीयपदोपादानम् । इन्द्रियाश्रय इति । इन्द्रियसंयो-
गीत्यर्थः । तथापि तेनैव व्यभिचारः घटादीनामपि प्राप्यकारित्वेनेन्द्रियाणा-
मिन्द्रियसंयोगित्वादत आह । अर्थाश्रय इति एवमपि व्यभिचारस्तदवस्थ
एव घटादीनामपि रूपाद्यर्थसमवायेनार्थाश्रयत्वात् । अथ समवायाभिप्रायेणाश्र-
यत्वं तथा ऽपि न समवाय इन्द्रियाणां शरीरे । घ्राणस्य पार्थिवत्वेन सम-
वायो न विरुद्ध इति चेद् न । तस्य शरीरावयवसमवायित्वेन शरीरासमवायात्
यदि नासिकाग्रमेव घ्राणम् अथ तदाधारमतीन्द्रियं तथा ऽपि न तत्सम-
वेतं शरीरं प्रत्यक्षाप्रत्यक्षवृत्तेर्वायुवनस्पतिसंयोगवदप्रत्यक्षत्वप्रसङ्गाद्देहस्य ।
अपि च यदा चेष्टेन्द्रियार्थस्य समवायेन शरीरत्वं हन्त भो इन्द्रियसमवा-
यिकारणेषु परमाणुषु समस्तमेतदस्तीति तेषामपि शरीरत्वप्रसङ्ग इत्याह
समस्तेति । स्यादेतत् । भवन्मते ऽपि चक्षुरादिभिरिन्द्रियैर्व्यभिचारः तेषामपि
यथोक्तव्यापाराधारत्वादत आह यथा स्थितीति । मूर्तान्तराप्रयोगे सतीति
विशेषितं चक्षुरादयस्तून्मीलनान्मूर्तेन शरीरेण प्रयुज्यन्त इति न प्रसङ्गः । शेषं
तु चेष्टाधारं एव न भवति तदेतदुक्तलक्षणं शरीरं भावयन्निवेदयतीति
सिद्धम् । इन्द्रियस्योपनायकत्वेनार्थादिभ्यो विशेषादिन्द्रियाणामर्थादिभ्यः
पूर्वं लक्षणं न च विशेषलक्षणमकृत्वा सामान्यलक्षणे शक्यमिति भाष्यकारः
प्रथममिन्द्रियाणां सामान्यलक्षणं निर्देशोपयुक्तमाह । भोगसाधनानीति ।
अनेन यच्छरीरसंयुक्तं संस्कारक*दोषव्यतिरिक्तं साक्षात्प्रतीतिसाधनं तदिन्द्रि-
यमिति सामान्यलक्षणं सूचितम् । साक्षात्प्रतीतिसाधनमिन्द्रियमिति वक्तव्ये
भोगसाधनाभिधानं निर्देशप्रयोगीति । पारम्पर्येण च भोगसाधनत्वं छायादीनां
साक्षान्मनस एव तत्साधनत्वात् । सुखदुःखसाक्षात्कारस्य भोगत्वात् ।

घ्राण-भ्यः†(सू. १२)॥ सर्वेन्द्रियाणीति लक्ष्यनिर्देशः घ्राणादीनीत्य-
र्थः । तेषां पञ्चानां पञ्चैव लक्षणानीति कथयति लक्षणसूत्राणीति । अपास्तः सूत्रं १२

---

* संस्कारकदोषेति । ६ । २ पु पाठः ।

† घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य इति सूत्रार्थः । टीकायामादर्शे सूत्रेण
[illegible] तथैव स्थापितम् । [illegible] ।

विचार्य्यमाणानि च सूत्राणीत्यर्थः । समानजातीयं घ्राणादेः रसनादि प्रतिनियतविषयत्वाद् असमानजातीयं तु मनआदि सर्वविषयमिति । जिघ्रतीत्यादि-
१ भाष्यनिराकरणीयशङ्कामाह उद्देशे सति । प्रमाणाद्युद्देशेन साम्यादित्यर्थः । लक्षणं हि विधेयं लक्ष्यं चोद्दिश्य ज्ञातं चोद्दिश्यते ऽज्ञातं च विधीयत इति न चैकस्य युगपज्ज्ञाताज्ञाते सम्भवत नापि लक्ष्यलक्षणत्वे इति भावः । परिहरति नेदं तथा यथोद्दिष्ट इत्यर्थः । कस्मात्करणभावात् स्वविषयग्रहणलक्षणत्वं यतो घ्राणादीनाम् । एतदुक्तं भवति । इन्द्रियाणामतीन्द्रियत्वात्सर्वदा स्वस्वविषयोपलब्धिकरणत्वेनैवानुमातव्यानि तस्मात्स्वस्वविषयोपलब्धिसाधनत्वमेव समानासमानजातीयव्यवच्छेदकतया लक्षणं तदेकार्थसमवायि घ्राणत्वादि लक्ष्यम् । अत्र च घ्राणादिशब्दाः पङ्कजादिपदवदवयवार्थं निमित्तीकृत्य क्वचित्क्वचित्सामान्यविशेषे वर्त्तन्ते अवयवार्थस्य प्रतीयमानस्यासति बाधके परित्यागायोगात् । अश्वकर्णादेः वृक्षविशेषवाचके वाजिकर्णायोगेन बाधकेनावयवार्थपरित्यागात् । अवयवार्थयोगे ऽपि गन्धाद्युपलब्धिसाधने सन्निकर्षादेः घ्राणादिशब्दाप्रयोगात् । अवयवार्थान्वित घ्राणत्वादौ घ्राणादिशब्दप्रवृत्तिर्निमित्त तया च घ्राणादिपदमेव घ्राणत्वादिपरं लक्ष्यनिर्द्देशः । तच्चेन्द्रियाणीत्यनेन सूचितं तदेव त्ववयवार्थपरं लक्षणनिर्द्देशो घ्राणेति । न च सन्निकर्षेण गन्धोपलब्धिसाधनेन च व्यभिचारः इन्द्रियसामान्यलक्षणयुक्तस्य गन्धोपलब्धिसाधनत्वं न सन्निकर्षस्यास्ति तदनेन जिघ्रतीत्यादि स्वविषयग्रहणलक्षणानि इत्यन्तं भाष्यं व्याख्यातम् निर्वचनग्रहणेन पदप्रवृत्तिनिमित्तमात्रमुच्यते तेन त्वक्पदमपि सगृहीतं भवति । तस्यापि त्वक्स्थाने इन्द्रिये स्पर्शोपलब्धिसाधने यथोपचार इति । भूतेभ्य इति सूत्रावयवतात्पर्यपरं भाष्यं भूतेभ्य इति नानाप्रकृतीनामित्यादि तद्वार्त्तिककारो व्याचष्टे भूतेभ्य इति । पृथिव्यादीति । पृच्छति कः पुनरिति । उत्तरं भूतगुणविशे-
२२ षग्रहणसाधनत्वं घ्राणेनैव पृथिव्या यो गुणविशेषो गन्धः स गृह्यते न रसनादिना । एवं रसनेनैवापां यो माधुर्यं गुणविशेषः स गृह्यते एवं चक्षुषैव शुक्लभास्वरं रूपं तेजस इति एवं त्वचैवानुष्णाशीतस्पर्शो ऽपाकजो वायोः एवं श्रवणेनैव शब्दो नभस इति नियमः । अत्र च प्रयोगः गन्धोपलब्धिः करणसाध्या क्रियात्वात् छिदिक्रियावदिति । एव सा तदन्यक्रियाकरणातिरिक्तकरण-

निष्पाद्या तदन्वयव्यतिरेकान*नुविधाने सति कार्य्यत्वाद्या क्रिया यत्कारणान्व-
यव्यतिरेकाननुविधाने सति कार्य्या सा सर्वा तत्क्रियाकरणातिरिक्तकरणनि-
ष्पाद्या यथा घटादिक्रिया घटादिक्रियाकरण†दण्डाद्यतिरिक्तकरणनिष्पाद्या तथा
चेयं तस्मात्तथा । तच्च करणं चक्षुराद्यतिरिक्तं घ्राणं तद् द्रव्यं संयोगाधार-
त्वात्‡ तच्च पार्थिवं द्रव्यत्वे सति रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात्
पार्थिवान्तरवत् । एवं रसनादिष्वपि योज्यम् । तदिदमुक्तं यज्जातीयमिन्द्रियं ७३ । १
पार्थिवं पायसीयं वा भवति तस्य पृथिव्याः पायसो यो गुणविशेषो गन्धो
वा मधुर एव वा रसभेदस्तेन पृथिवी अबादिभ्य आपो वा पृथिव्यादिभ्यो
व्यवच्छिद्यन्ते इतरेतरभूतव्यवच्छेदहेतुः स तेनैवेन्द्रियेण गृह्यते नान्ये-
नेति । न चैवं रसना अपामिव पृथिव्या अपि रसभेदं गृह्णातीति पार्थिवी
भवति तथात्वे तया गन्धोऽप्युपलभ्येत । येन तेनैवेन्द्रियेणेति नियमो
गुणविशेषमवधारयति न त्विन्द्रियमिति । अथ च कर्णशष्कुलीसंयोगोपाधिना
श्रोत्रस्य नभसः कथं विच्छेदं विषयित्वा भूतेभ्य इति पञ्चम्यर्थो व्याख्यातः ।
अनेन सत्त्वाहङ्कारिकाणीन्द्रियाणि इति यदाहुः साङ्ख्यास्तन्निराकृतम् ।
निराकरणहेतुमाह ऐकात्म्य इति । श्लिष्टं पदं साङ्ख्यानां किल राद्धान्ते कार-
णात्मकं कार्य्यं तच्च कारणमिन्द्रियाणामहङ्कार एक इत्यैकात्म्यमेककारणकत्वं
तथा चैकात्म्यमेकत्वं घ्राणादीनामित्यनियमः स्यादिति । तदेतद्विभजते
यदि पुनरिति । शङ्कते एकेति । विभजते । अथेति । एकः कारणं यस्यो-
ऽनियोगः एक चैकात्म्यमित्यर्थः । निराकरोति न ब्रूम इति । सत्यप्येक-
निमित्ते साधारणे तथापि गन्धाद्युत्पत्तौ पूर्वगन्धादिध्वंसानां भेदादुपपन्न-
कार्य्यनानात्वमिति । तदिदमुक्तं ये पूर्वं रूपादयः तेषां स्वगतो विशेषः
प्रयोजक इत्यर्थः । अथ रूपत्वादिसामान्यमेव कस्मान्न स्वगतो विशेष इत्यत
आह । पूर्वं च कृत्वेति । रूपत्वादिसामान्यानां साङ्कर्य्येण प्रकारतमादि-
भेदः अध्यमाना तु स्तोकभूयस्त्व निःशेषत्वे नोपपद्यत इति भावः । पुनः
शङ्कते एकं कर्म्मेति । निराकरोति नेति । समवायिकारण स्वात्मन्यारभत इति ।

* सर्वेषु । (१ । अनुविधाने सति कार्यं-३ नास्ति ।

† चक्षुरादावतिरिक्तकरणनिष्पाद्या २ पु पा ।

‡ संयोगाधार इत्यधिक १ पु पा ।

८ वा ऽपेक्षत इति भावः । शङ्कते यदि तर्हीति । लक्षणहानिस्तया च लक्ष्यहानिरित्यर्थः । निराकरोति । चरमभाविनिमित्तान्तरं भावरूपमित्यर्थः । संयोगाभावं तूत्तरसंयोगजननायापेक्षत एव । उपसंहरति । तस्मादिति । इन्द्रियप्रकृतित्वं तु भूतलक्षणं वेदितव्यम् ।

क्रमप्राप्तमर्थलक्षणमवतारयति भाष्यकारः इमे त्विति । तुशब्देनार्थमात्राद्व्यवच्छिनत्ति । येषामिन्द्रियविषयत्वेन भाव्यमानानां निःश्रेयससाधकत्वं मिथ्याज्ञानविषयीकृतानान्तु संसारनिमित्तता त इमे इत्यर्थः ।

गन्ध-र्थाः (सू. १४)॥ अथ चोद्देशक्रमस्मारिता अर्था लक्ष्यतया प्रतिपत्तव्याः तेषां च लक्षणं तदर्था इति । तदित्यनन्तरलक्षितानीन्द्रियाणि परामृशति । तेषामिन्द्रियाणामर्था इन्द्रियैर्ग्राह्यत्वमर्थानां लक्षणम् । एतावतैव लक्षणे पर्य्यवसिते सुहृद्भावेन विभागाभिधानं* पृथिव्यादिगुणा इति । पृथिव्यादीनामपि च गुणाश्च धर्म्माः संख्याकर्म्मादयः । विभागे ऽप्येतावता ऽवगते गन्धाद्यभिधानं सुहृद्भावेनेन्द्रियविषयनियमज्ञापनार्थम् । पृथिव्यादीनामिति भाष्यं न षष्ठीसमासज्ञापनार्थमपि त्वर्थाभिधानमात्रम् । यथाविनियोगमिति । यथाक्रमं पृथिव्यादिष्वनिलान्तेषु गन्धादयः स्पर्शान्ताः चतुस्त्रिद्व्येकनियमेन विनियुक्ताः शब्दश्चाकाश एवेत्यर्थः । तदर्था इति लक्षणपदं व्याचष्टे इन्द्रियाणामिति । येन क्रमेण घ्राणादय इन्द्रियसूत्रे पठिताः येन चेह गन्धादयस्तदनतिक्रमेणेत्यर्थः । अथ वार्तिककारः पृथिव्यादिगुणा इत्यत्रानेकसमासप्रतिभासनात्संशय्य कृत्वा द्वन्द्वसमासमवधारयति । पृथिव्यादिगुणा इति । षष्ठीसमासेनाभिन्नार्थत्वात्सप्तमीसमासो न दर्शितः । ननु कण्ठेकाल इतिवद्व्यधिकरणे ऽपि बहुव्रीहिर्भविष्यति पृथिव्यादीनां गुणा येभ्यो गन्धादिभ्यस्ते तथा । तथा हि परमाणुगता गन्धादयो ऽवयविनि गन्धाद्यारभन्ते नभोगतश्च शब्दो नभसि समानजातीयं शब्दमित्यत
२० आह । न चान्यथेति । व्यापकशास्त्रे व्यधिकरणानां बहुव्रीहिर्द्योतककृतः न सर्वेषु न च गन्धादीनां पृथिव्यादिगुणहेतुत्वप्रतिपादनं क्व चिदर्थायोपयुज्यत इति भावः । अन्यसमासः कर्म्मधारयादिः । द्वन्द्वमवधा-

* पुनर्विभागाभिधानमिति १ पाठ ।

शिरमाक्षिपति न ग्रन्थ इति । समाधत्ते नोभयस्यापीति । पृथिव्यादि- ७५ । ०
ग्रहणेनेति । यद्यादिशब्देन वाय्वादयो गृह्येरन् तदर्था इति लक्षणमव्यापकं
स्यात् तेषां बाह्येन्द्रियार्थत्वाभावादित्यर्थः । गुणग्रहणेन सर्व इति
आभिमानाभिमताभिप्रायं गुणशब्दस्य धर्मवचनत्वात् । विशेषस्तु रेखोपरे-
खादिः न त्वन्यः तस्यातीन्द्रियत्वात् । एतेषां च यथायोग मिथ्याज्ञानस-
म्यग्ज्ञानविषयाणां रागवैराग्यहेतुत्वमूहनीयम् । चोदयति । गन्धेति । परि-
हरति । न कर्त्तव्यं लघुसूत्रं गन्धादीनां पृथगभिधानं कर्त्तव्यमित्यर्थः ।
नियममाह इन्द्रियाणीति । तत्रेत्यनियतेषु मध्ये पृथिव्यादीनि इन्द्रिय-
ग्राह्याणि शेषश्च गुणराशिः संख्यादिर्विशेषान्तो द्वीन्द्रियग्राह्य इत्यर्थः ।
तथा सर्वेन्द्रियग्राह्य इत्यर्थः । अत्र चोद्यमुत्थापयति । दर्शनस्पर्शनाभ्या-
मिति । तस्य पर्य्यनुयोगमाह । स इति । स्वसंवेदनेन मानसेन वा रूपादा-
लम्बनप्रत्ययो रूपादिविशिष्टो यथा ऽनुभूयते एवं रूपाद्यतिरिक्तघटादिवि-
शिष्टो ऽनुभूयतइत्यर्थः । अत्र पर आह । रूपादिभ्यस्तथा सन्निवि-
ष्टेभ्य इति । तथेत्याकारं निर्दिशति । सन्निवेशो व्यवस्थानं रूपादिपरमाणव
एव तेन तेनाकारेणोत्पन्ना एकयोदकाहरणक्रियया व्यवच्छिन्ना घटादय इत्यु-
च्यन्ते अनुरञ्जनादिकया तु रूपादिव्यपदेशः । यथाह घट इत्यपि च रूपा-
दय एवैकार्थक्रियाकारिणस्तथा व्यपदिश्यन्तइति । निराकरोति । नाकारा-
र्थेति । तथार्थस्य यथापदार्थेन नित्याभिसंबन्धात् यथा घटस्तथा सन्निविष्टा
रूपादय इत्यर्थो गम्यते तेन घटाकारेण घटसादृश्येनेत्ययमर्थः तथा च दूष-
णमिति । दूषणान्तरमाह रूपादिमात्रे चेति । न तावद्रूपादिष्वेव एको घटः
क्षणान्तरे तत्प्रयोगाभावप्रसङ्गात् तस्माद्रूपादिमात्रमविवक्षितं* तथा सत्येतद्दू-
षणमित्यर्थः । शङ्कते संस्थानभेदादिति । यथासंस्थाना रूपादयो ऽर्था अनुभू-
यन्ते तथा सन्निविष्टेभ्यो घटादिप्रत्यया इत्यर्थः । निराकरोति । नैतदिति ।
अन्यत्वे तदेवावयवीति संज्ञाभेदमात्रम् । अनन्यत्वे व्यर्थाभिधानं शङ्कते ।
घटादिप्रत्यया इति । एकानेकविचारासहत्वाद् असन्त एव घटादयो
ऽनादिविकल्पवासनाजनितविकल्पप्रत्ययप्रतिभासमानाः । शब्दशब्देन विक-
ल्पमुपलक्षयति शब्दस्थापनावशादिति । निराकरोति । तदयुक्तमिति । ७७

---

* अविवक्षितभेदमिति पुस्तकद्वये पाठः ।

८ था ऽपेचतइति भाव:। शङ्कते यदि तर्हीति। लक्षणहानिस्तया च लक्ष्यहानिरित्यर्थ:। निराकरोति। चरमभाविनिमित्तान्तरं भावरूपमित्यर्थ:। संयोगाभाव तूत्तरसंयोगजननायापेचितएव। उपसंहरति। तस्मादिति। इन्द्रियप्रकृतित्व तु भूतलक्षण वेदितव्यम्।

क्रमप्राप्तमर्थलक्षणमवतारयति भाष्यकार: इमे त्विति। तुशब्देनार्थमात्राद्व्यवच्छिनत्ति। येषामिन्द्रियविषयत्वेन भाव्यमानानां नि:श्रेयससाधकत्व मिथ्याज्ञानविषयीकृतानान्तु संसारनिमित्तता तइमे इत्यर्थ:।

गन्ध-र्था: (सू. १४)॥ अथ चोद्देशक्रमस्मारिता अर्था लक्ष्यतया प्रतिपत्तव्या: तेषां च लक्षण तदर्था इति। तदित्यनन्तरलक्षितानीन्द्रियाणि परामृशति। तेषामिन्द्रियाणामर्था इन्द्रियैरर्थमाणत्वमर्थानां लक्षणम्। एतावतैव लक्षणे पर्य्यवसिते सुहृद्भावेन विभागाभिधान* पृथिव्यादिगुणा इति। पृथिव्यादिष्वेजाति च गुणाश्च धर्म्मा: सङ्ख्याकर्म्मादय:। विभागे ऽप्येतावता ऽवगते गन्धाद्यभिधान सुहृद्भावेनेन्द्रियविषयनियमज्ञापनार्थम्। पृथिव्यादीनामिति भाष्यं न षष्ठीसमासज्ञापनार्थमपि त्वर्थाभिधानमात्रम्। यथा विनियोगमिति। यथाक्रम पृथिव्यादिष्वनिलान्तेषु गन्धादय: स्पर्शान्ता: चतुस्त्रिद्व्येकनियमेन विनियुक्ता: शब्दश्चाकाशएवेत्यर्थ:। तदर्था इति लक्षणपद व्याचष्टे इन्द्रियाणामिति। येन क्रमेण घ्राणादय इन्द्रियसूत्रे पठिता: येन चेह गन्धादयस्तदनतिक्रमेणेत्यर्थ.। अथ वार्त्तिककार: पृथिव्यादिगुणा इत्यषानेकसमासप्रतिभासनात्संशय कृत्वा द्वन्द्वसमासमवधारयति। पृथिव्यादिगुणा इति। षष्ठीसमासेनाभिप्रायेत्यात्मसमीसमासो न दर्शित:। ननु कष्टेकाल इतिवद्वैयधिकरण्ये ऽपि बहुव्रीहिर्भविष्यति पृथिव्यादीनां गुणा येभ्यो गन्धादिभ्यस्ते तथा। तथा हि परमाणुगता गन्धादयो ऽवयविनि गन्धादीनारमन्ते नभोगतश्च शब्दो नभसि समानजातीय शब्दमित्यत

१२० आह। न चान्यपदार्थेति। चापकचशाह्र चिह्नाधिकरणानां बहुव्रीहिर्वैयधिकरण्ये न सर्वत्र न च गन्धादीना पृथिव्यादिगुणहेतुत्वप्रतिपादन क्व चिदिष्टंडायोपयुज्यतइति भाव। अन्यसमास: कर्म्मधारयादि:। द्वन्द्वसमधा-

---

* पृथिव्यादिगुणाभिधानमिति ९ पाठ:।

रिसमाविशति न द्वन्द्व इति । समाधत्ते नोभयस्यापीति । पृथिव्यादि- ७५ । ८
गुणेनेति । यद्यादिशब्देन वाय्वादयो गृह्येरन् तदर्था इति लक्षणमव्यापकं
स्यात् तेषां बाह्येन्द्रियार्थत्वाभावादित्यर्थः । गुणग्रहणेन सर्वं इति
अभिमतानभिमताभिप्रायं गुणशब्दस्य धर्मवचनत्वात् । विशेषस्तु रेखोपरे-
खादिः न त्वन्त्यः तस्यातीन्द्रियत्वात् । एतेषां च यथायोगं मिथ्याज्ञानस-
म्यग्ज्ञानविषयाणां रागवैराग्यहेतुत्वमूहनीयम् । चोदयति । गन्धेति । परि-
हरति । न कर्तव्यं लघुसूत्रं गन्धादीनां पृथगभिधानं कर्त्तव्यमित्यर्थः ।
नियममाह इन्द्रियाणीति । सर्वेष्वनियतेषु मध्ये पृथिव्यादीनामपि इन्द्रिय-
ग्राह्याणि शेषस्य गुणराशिः संख्यादिविशेषान्तो द्वीन्द्रियग्राह्य इत्यर्थः ।
तथा सर्वेन्द्रियग्राह्य इत्यर्थः । अत्र चोद्यमुत्थापयति । दर्शनस्पर्शनाभ्या-
मिति । तस्य पर्यनुयोगमाह । स इति । स्वसंवेदनेन मानसेन वा रूपाद्या-
लम्बनप्रत्ययो रूपादिविशिष्टो यथा ऽनुभूयते एवं रूपाद्यतिरिक्तघटादिवि-
शिष्टो ऽनुभूयत इत्यर्थः । अत्र पर आह । रूपादिभ्यस्तथा सन्निवि-
ष्टेभ्य इति । तथेत्याकारं निर्दिशति । सन्निवेशो व्यवस्थानं रूपादिपरमाणव
एव तेन तेनाकारेणोत्पन्ना एकयोदकाहरणक्रियया व्यवच्छिन्ना घटादय इत्यु-
च्यन्ते अनुरञ्जनादिकया तु रूपादिव्यपदेशः । यथाह घट इत्यपि च रूपा-
दय एवैकार्थक्रियाकारिणस्तथा व्यपदिश्यन्त इति । निराकरोति । नाकारा-
र्थेति । तथार्थस्य यथापदार्थेन नित्याभिसंबन्धात् यथा घटस्तथा सन्निविष्टा
रूपादय इत्यर्थो गम्यते तेन घटाकारेण घटसादृश्येनेत्ययमर्थः तथा च दूष-
णमिति । दूषणान्तरमाह रूपादिमात्रे चेति । न तावद्रूपादिविषय एको घटः
घटान्तरे तत्प्रयोगाभावप्रसङ्गात् तस्माद्रूपादिमात्रमविवक्षितं* तथा सत्येतद्दू-
षणमित्यर्थः । शङ्कते संस्थानभेदादिति । यथासंस्थाना रूपादयो ऽर्था अनुभू-
यन्ते तथा सन्निविष्टेभ्यो घटादिप्रत्यया इत्यर्थः । निराकरोति । नैतदिति ।
अन्यत्वे तदेवावयवीति संज्ञाभेदमात्रम् । अनन्यत्वे व्यर्थाभिधानं शङ्कते ।
घटादिप्रत्यया इति । एकानेकविषयासत्त्वाद् असन्त एव घटादयो
ऽनादिविकल्पवासनाजनितविकल्पप्रत्ययप्रतिभासमानाः । शब्दशब्देन विक-
ल्पमुपलक्षयति शब्दसाधनावस्थादिति । निराकरोति । तदयुक्तमिति । ७७

---

* अविवक्षितभेदमिति पुस्तकान्तरे पाठः ।

बीजं मिथ्याप्रत्ययस्य सम्यक्प्रत्ययविषयो ऽर्थः । तस्य क्व चिदभ्युपगमे ऽभिमतार्थहानिमित्यर्थः । यस्तु मिन्ने ऽक्रमत्वादतया ब्रूते ऽनादिमान् मिथ्याप्रत्ययः सम्यग्ज्ञानं निमित्तीकरोति अयं पुनरनादिः पूर्वपूर्वमिथ्याप्रत्ययजन्मा मिथ्याप्रत्ययप्रवाहः कृतमत्र सम्यग्ज्ञानेनेति तं प्रत्याह । **मिथ्याप्रत्ययश्चैन** इति । रूपादिव्यतिरेके अवयविन इत्यर्थः । परस्त्वव्यतिरेके प्रमाणमाह । **न नास्तीति** । न हि मांसतोयातिरिक्तः कश्चिद्वृषो नाम नापि तृणराजतरुव्यतिरिक्ता पङ्क्तिर्नाम । दूषयति । **नायं हेतुरिति** । ये घटादिभावमापन्ना भवतां दर्शने इति कामे ऽष्टद्रव्यको ऽणुरयञ्शब्दः रूपधातुररूपधातुः कामधातुरिति त्रेधानुक्तं जगत् तत्र कामधातुस्वरूपमुक्तं कामे कामधातौ अष्टद्रव्यको ऽणुः रूपरसगन्धस्पर्शा इति चत्वारि द्रव्याणि पृथिव्यप्तेजोवायुरिति चत्वारि द्रव्यशब्दो वस्तुवचनः तेषामष्टद्रव्यको ऽणुरित्यागमः । सो ऽयं रूपाद्यतिरिक्तपृथिव्याद्यनभ्युपगमे बाध्येत । अथ वैयात्यादुच्यते पृथिव्यादीनामिति ततश्च सांवृतत्वेनाष्टसंख्यासिद्धेर्नागमविरोध इति भावः । उत्तर तथा ऽपीति । मा भूवन् वस्तुत उभये ऽपि सांवृता भविष्यन्तीत्यत आह **संहन्यमानस्येति** । यो हि यत्नवः स तदभावमभ्युपगम्यागस्याभ्युपगमः न खलु संयुज्यमानानामभावे संयोगः शक्याभ्युपगम इत्यर्थः । न च संवृतिः सा हि पररूपं स्वरूपेण संवृणोति संहन्यमानाभावे च न संघातो न संहन्यमाना इति किमनया स्वरूपेणाव्रियेतेति भावः । तदेवं तदग्रहे तद्बुद्ध्यभावादित्यस्य व्याघातदोषं दर्शयित्वा स्वसामर्थ्यालोचनेन विवक्षितनिष्ठामिधायिता किं त्वसंबद्धार्थता हेतुवचनस्येत्याह । **तदग्रहे इति** । एवं किलाचाभिमतम् । पृथिव्यादयो रूपादिभ्यो ऽभिन्ना रूपाद्यग्रहे पृथिव्यादिबुद्ध्यभावादिति । तत्र तदेतदग्रहे तद्बुद्ध्यभावादित्यनेन न शक्यं वक्तुं तदग्रह इत्यत्र तच्छब्दः प्रधानपरामर्शी पृथिव्यादयश्च धर्मितया प्रधानमिति तएव परामृश्याः । तथा च पृथिव्याद्यग्रहे पृथिव्यादिबुद्ध्यभावादिति स्यात् । तथा च प्रतिज्ञातस्तेषां रूपाद्यभेदो न सिध्येदित्यसंबद्धम् । अथ रूपादयः परामृश्यन्ते तथा ऽपि रूपाद्यग्रहे रूपादिबुद्ध्यभावादिति स्यात् तथा ऽपि न प्रतिज्ञातार्थसिद्धिरित्यसंबद्धार्थमित्यर्थः । एवं शब्दानामपि प्रतिज्ञाप्रयोगे शून्यः प्रबन्ध इत्याह एवं रूपादिमात्रमिति । प्रति-

दोषमाह । सर्वत्र चेति । नानात्वैकार्थसमन्वयनियमाया बहुत्वसंख्याया ७८ । १३
अभेदैकार्थनियतैकत्वसंख्यया सामानाधिकरण्यविरोध इत्यर्थः । तदेतदनैका-
न्तिकमिति चोदयति नन्विति । निराकरोति । तन्नानभ्युपगमादिति ।
समानं धर्मसाधनं यमाः पञ्च नियमाः पञ्च ब्रह्मचारिगृहस्थवानप्रस्थयती-
नामविशेषेण दशधर्मसाधनं तेषां धर्मसाधनत्वमेकं चातुराश्रम्यमिति
प्रकृतिगतविभक्तीराह । आश्रमप्रकृतिगता तु विभक्तिः प्रकृत्यर्थसमवेतामेव
बहुत्वसंख्यामाह समानार्थानामपि प्रकृतीनां रूपभेदेन तत्परस्य प्रत्ययस्य
सामर्थ्यभेदात् । यथा ऽप्तोयशब्दयोस्तुल्यार्थत्वे ऽपि तोयशब्दात्परा विभ-
क्तिस्तोयानीति तोयसमवेतामेव बहुत्वसंख्यामाह । आप इति न तोयग-
ताम् अपि तु तत्सबद्धगतां तत्संबद्धाश्च तदवयवास्तद्बहुपादयो वा
बहव इत्येकस्यामपि पाथःकणिकायां बहुवचनोपपत्तिराप इति । न च
सौरस्ताडं क्रन्दतो ऽपि लोकस्य निवृत्तेर्नैवमिति सांप्रतम् । लोको हि दृष्ट-
व्यवहारमात्रप्रयोजनो न विवेचयति परीक्षकास्तु तदनुसारिणो विवेचयन्त्येव ।
अन्यथा हि प्रत्यवादिलक्षणप्रणयनवैयर्थ्यप्रसङ्गः । एतेन दाराः षण्णगरीत्या-
दयो व्याख्याताः । षाड्गुण्यमपि षण्णां गुणानामेकं राजप्रयोजनसाधकत्वं
वैशेषिकमित्यत्रापि विशेषाणां समानासमानजातीयव्यवच्छेदकत्वमेकमुच्यत
इति गमयितव्यम् । हेतुदोषमाह । असिद्धो ऽपीति । स्फटिकस्य धवलं रूपं
तच्च नीलद्रव्यानुषङ्गादभिभूतं न प्रतीयते स्फटिकश्च प्रतीयते न च नीलस्य
स्फटिकवर्णस्योत्पत्तिरिति तृतीये निवेदयिष्यते तस्मादसिद्धो हेतुरित्यर्थः । दृ-
ष्टान्तश्च साध्यविकल इत्याह । यो ऽप्ययमिति । उत्पन्नपाकजानां तैले
चार्थेऽपि या पिष्टमांसपिण्डावयवानां द्रव्यान्तरेण तोयेन संपृक्तानां पाकजो-
त्पत्तौ सत्या न चासौ सहसेत्युक्तं कालविशेषानुग्रहे सतीति । स च ७९ ।
संयोगभेद एव तोयमांसयोर्न त्ववयवी विजातीययोरनारम्भकत्वात् । नापि
यूषजातीयं तोयसंयोगि द्रव्यं क्षीरजातीयमिवेति युक्तम् । तोयविरहे का-
ठिन्ये ऽपि क्षीरबुद्धिव्यपदेशयोस्तादवस्थ्यात् । इह तु काठिन्येन यूषबुद्धि-
व्यपदेशाविति संबन्धभेद एव तोयमांसयोर्यूष इति न्याय्यम् । स चानुपप-
सिद्धः संयोगव्यतिरिक्तः । एवं बहुत्वसंख्या संख्यातिरिक्ता ऽनुभवसिद्धे-
येति । एवं तत्र तत्र व्याख्येयम् । अनाद्यन्तोऽप्यनारब्धावयविविशिष्टोति दृष्ट-

व्यम् । न च परकीयसाधनदोषोद्भावनमात्रात्स्वपक्षसिद्धिरिति सिद्धान्तिनं साधनं
३ पृच्छति । अथ रूपादिभ्यो ऽर्थान्तरे द्रव्ये किं प्रमाणमिति । यतोयं परो
रूपादिभ्यो ऽर्थान्तरं द्रव्यं प्रत्यक्षेण सिद्धानपि स्वसिद्धान्ताभ्यासाहितव्यामोहा-
पस्मारो न तथा व्यवहरति अतो ऽनेनानुमानेन स व्यवहार्य्यते । अस्ति हि
सर्वेषामेव लौकिकपरीक्षकाणां ब्राह्मणस्य कमण्डलुरितिवच् चन्दनस्य रूपा-
दय इति व्यपदेशः । तत्र च परो रूपाद्युपलम्भमभ्युपगच्छति चन्दनोपलम्भमपि
अन्यथा तद्बुद्ध्यभावादित्येतावन्मात्रे वक्तव्ये कथमाह तदग्रहइति तेनाविग-
च्छामो रूपादिग्रहे ऽस्य चन्दनबुद्धिरभिमतेति । न चासौ मनोमात्रयोनिः स्मार्त्ती
ति न्याय्यम् उपपादितमेतस्याः सविकल्पिकायाः इन्द्रियजन्यत्वं व्यवसायात्म-
कपदव्याख्यानावसरे । द्रव्यबाधकप्रमाणानि च परीक्षापर्वणि निराकरिष्यन्ते ।
तस्मात्सिद्धमुपलभ्यत्वं चन्दनस्य व्यपदेश्यस्य सो ऽयं चन्दनो विवादगोच-
रेभ्यो रूपादिभ्यो भिन्नः स्वयमुपलभ्यस्य च समस्तैरुपलभ्यैर्व्यपदिश्यमानत्वात्
प्रधानमपि सांख्यैर्व्यपदिश्यते प्रधानस्य रूपादय इति तन्निवृत्त्यर्थमुपलभ्य-
स्येति । प्रधानं तु काल्पनिकं नोपलभ्यते तथा ऽपि रूपादीनां मूलकारणं
प्रधानमित्यस्ति सांख्यानां व्यपदेशो ऽत उक्तमुपलभ्यैरिति । तथा ऽपि रूपा-
दीनां परस्परभिन्नानामन्योन्यं व्यपदेश्यव्यपदेशकभाव उपपत्स्यतइत्युक्तं सम-
स्तैरिति । अतः समस्तेभ्यो व्यपदेशकेभ्यश्चन्दनं भिन्नं भवति उपलभ्यस्यो-
पलभ्येनेति वक्तव्ये प्रत्यक्षस्य प्रत्यक्षेणेति वचनं रूपाद्यगमसमये ऽनुमेयेभ्यो
रसादिभ्य* एकान्ततो व्यपदेशं व्यावर्त्तयितुं न त्वस्यानुमानउपयोग इति ।
अस्यानैकान्तिकत्वमुद्भाव्य निराकरोति । सेनावनादिभिरिति । संख्या-
याम् असत्त्वमाशङ्क्य निराकरोति । तदसत्त्वमिति चेदिति ।
विधीयमानं प्रतिषिध्यमानमिति यथासंख्य निषेधस्य विध्यधीननिरूपणतया
निषेध्यमेकत्वमङ्गीकार्य्यं तच्च संख्येत्यर्थः । ननु सन्त्वमी प्रत्ययास्ते
तु द्रव्यमात्रनिबन्धना भविष्यन्ति कृतं संख्ययेत्यत आह विधि-
प्रत्ययेति । न द्रव्यातिरिक्तनिमित्तप्रत्याख्यानेनेत्यर्थः । प्रयोगान्तरमाह ।
१८ तत्प्रत्ययविषयनिमित्तप्रत्ययव्यतिरेकेणेति । घटप्रत्ययस्य विषयश्च
निमित्तं घटप्रत्ययश्च तद्व्यतिरेकेणेति तद्भिन्नसंख्यादिप्रत्ययस्य निमित्तान्तरा-

* रूपादिभ्य इति १ । २ पु॰ पा॰ ।

व्याप्तित्वात् तत्किमर्थमत्र बलमुत्पत्ताविति । चर्मणि द्वीपिनं हन्तीतिवद् ८० । ८
घटादिविषयनिमित्तव्यतिरेकभाज इत्यथापि प्रत्ययग्रहणं कर्तव्यम् । चोदयति ।
महत्त्वबुद्धिरपतेति । न संख्याया गुणस्य परिमाणगुणयोगसम्भव इत्यर्थः ।
परिहरति । नैष दोष इति । स्थानशब्देन तिष्ठतीति व्युत्पत्त्या संख्योच्यते
सा येषामस्ति ते गजवाजिपदातिप्रभृतयः स्थानिनः प्रत्येकं महान्तः तत्र ते
क्व विरलमेव क्व चित्पुनस्तज्जातीयस्यान्यद्रव्यान्तरसन्निधाने सत्युपचिताः
बहवो भवन्ति । तेन बहुत्वसंख्योपचयोपकरणात्तदेकार्थसमवेतमहत्त्वोपचया-
न्महती सेनेत्युच्यते । न चैतावता यत्र शतं गजादयो यत्र च सहस्रं तयोः
सेनयोर्महत्त्वाविशेषः उपचयापचयोपकरणत्वेन विशेषितत्वात् । एवं पृथि-
व्यादयो द्रष्टव्याः । प्रत्ययभेदाद्द्व्यादिभ्यः संख्याया भेदमुक्त्वा व्यपदेशभेदा-
दप्याह । अत एवेति । स्थाणुशब्देनापीति । मूर्तानां समानदेशत्वा-
भावान्न चैवं तु खदिरश्च स्थाणुश्च समवेतौ । न चावस्थितसंयोगेभ्यस्तद्-
विनाशकेभ्यः स्थाणोरुत्पत्तिरिति युक्तम् । यस्य द्रव्यस्य यावत्संयोग-
प्रचयो ऽसमवायिकारणं स तावानुत्पन्नमात्र एव तज्जनकः तस्य च चेषा-
योगात् तस्मात्पर्वणां संस्थानविशेष एव स्थाणुरिति गमयितव्यम् । अथा-
वस्थितसंयोगानां द्रव्यनाशापेक्षाणां जनकत्वं ततः संयोगप्रचयपदेन
स्थाणुत्वसामान्यविशेषवद् द्रव्यमुपलक्षणीयम् । तच्च खादिरतरोर्भिन्नमिति
प्रतिमाया महारजतमय्या अवयविन्याः शरीरं संस्थानमेव एवं शिला-
पुत्रकस्यावयविनः संस्थानमेव शरीरम् । शङ्कते । गुणसमुदाये ते । अता-
दात्म्येनाग्रहणं व्यतिरेकेणाग्रहण पृथक्शब्दो ऽप्यतादात्म्यमेव ब्रूते । दूष-
यति । अग्रहणस्येति । सतामपि वस्तूनामनुपलम्भो यथा मूलकीलकादीनां
प्रमाणाभावेन यथा पिशाचादीनां चानुपलम्भो ग्राह्याभावेन तस्माद्व्यतिरेका-
ग्रहणमात्रं हेतुरनैकान्तिक इति । शङ्कते । ग्राह्याभावादिति चेत् । ग्राह्या-
भावे सत्यग्रहणादिति हेतुः न त्वग्रहणमात्रमित्यर्थः । दूषयति प्रतिज्ञा-
र्थेनेति । प्रतिज्ञार्थस्यासिद्धत्वेन तद्विशिष्टो हेतुरसिद्ध इत्यर्थः । शङ्कते ।
ग्रहणेति । ग्रहणं प्रमाणम् । निराकरोति । न प्रमाणाभावमात्राद्व्यतिरे-
कप्रतिषेधः यस्तु योग्यप्रमाणाभावादिति विशेषहेतुः तं प्रत्याह । यत्र ८१
तदग्रह इति । असिद्धता हेतुदोषः । दर्शनस्पर्शनाभ्यामेकार्थप्रतिसन्धान-

व्यम् । न च परकीयसाधनदोषोद्भावनमात्रात्स्वपक्षसिद्धिरिति सिद्धान्तिनं साधनं पृच्छति । अथ रूपादिभ्यो ऽर्थान्तरे द्रव्ये किं प्रमाणमिति । यतोयं परो रूपादिभ्यो ऽर्थान्तरं द्रव्यं प्रत्यक्षेण विद्वानपि स्वसिद्धान्ताभ्यासाहितव्यामोहापस्मारो न तथा व्यवहरति अतो ऽनेनानुमानेन स व्यवहार्य्यते । अस्ति हि सर्वेषामेव लौकिकपरीक्षकाणां ब्राह्मणस्य कमण्डलुरितिवच्च चन्दनस्य रूपादय इति व्यपदेशः । तत्र च परो रूपाद्युपलम्भमभ्युपगच्छति चन्दनोपलम्भमपि अन्यथा तद्बुद्ध्यभावादित्येतावन्मात्रे वक्तव्ये कयमाह तदग्रहइति तेनाविगच्छामो रूपादिग्रहे ऽस्य चन्दनबुद्धिरभिमतेति । न चासौ मनोमात्रयोनिः स्मार्तीति न्याय्यम् उपपादितमेतस्याः सविकल्पिकाया इन्द्रियजन्यत्वं व्यवसायात्मकपदव्याख्यानावसरे । द्रव्यबाधकप्रमाणानि च परीक्षापर्वणि निराकरिष्यन्ते । तस्मात्सिद्धमुपलभ्यत्वं चन्दनस्य व्यपदेश्यस्य सो ऽयं चन्दनो विवादगोचरेभ्यो रूपादिभ्यो भिन्नः स्वयमुपलभ्यस्य च समस्तैरुपलभ्यैर्व्यपदिश्यमानत्वात् प्रधानमपि सांख्यैर्व्यपदिश्यते प्रधानस्य रूपादय इति तन्निवृत्त्यर्थमुपलभ्यस्येति । प्रधानं तु काल्पनिकं नोपलभ्यते तथा ऽपि रूपादीनां मूलकारणं प्रधानमित्यस्ति सांख्यानां व्यपदेशो ऽत उक्तमुपलभ्यैरिति । तथा ऽपि रूपादीनां परस्परभिन्नानामन्योन्यं व्यपदेश्यव्यपदेशकभाव उपपत्स्यतइत्युक्तं समस्तैरिति । अतः समस्तेभ्यो व्यपदेशकेभ्यश्चन्दनं भिन्नं भवति उपलभ्यस्योपलभ्येनेति वक्तव्ये प्रत्यक्षस्य प्रत्यक्षेणेति वचनं रूपावगमसमये ऽनुमेयेभ्यो रसादिभ्य* एकान्ततो व्यपदेशं व्यावर्त्तयितुं न त्वस्यानुमानउपयोग इति । अस्यानैकान्तिकत्वमुद्भाव्य निराकरोति । सेनावनादिभिरिति । संख्यायाम् असत्त्वमाशङ्क्य निराकरोति । तदसत्त्वमिति चेदिति । विधीयमानं प्रतिषिध्यमानमिति यथासंख्यं निषेधस्य विध्यधीननिरूपणतया निषेध्यमेकत्वमङ्गीकार्य्यं तच्च संख्येत्यर्थः । ननु सन्त्वमी प्रत्ययास्ते तु द्रव्यमात्रनिबन्धना भविष्यन्ति कृतं संख्ययेत्यत आह विधिप्रकारेति । न द्रव्यातिरिक्तनिमित्तप्रत्याख्यानेनेत्यर्थः । प्रयोगान्तरमाह । १० तत्प्रत्ययविषयनिमित्तप्रत्ययव्यतिरेकेणेति । घटप्रत्ययस्य विषयश्च निमित्तं घटप्रत्ययश्च तद्व्यतिरेकेणेति तद्विशिष्टसंख्यादिप्रत्ययस्य निमित्तान्तरा-

* रूपादिभ्य इति १ । ३ पु० पा० ।

पारमार्थिकी चितेरपरिणामितया सङ्क्रमायोगात् । तस्माद् भ्रान्तिः सा च न तावद्बुद्धेः तस्या अचेतनत्वात् । नाप्यात्मनः तस्यावृत्तिकत्वात् तथात्वे परिणामापत्तेः । तस्मात्कृपणधनमिवात्मचैतन्यं न स्वपरोपकारीति बुद्धेः स्वाभाविकं चैतन्यमास्थेयं तथा चोभयचैतन्ये दूषणमुक्तम् । प्रत्ययव्यवस्था यदेककर्तृकत्वानुमानं तत्र स्यादित्यर्थः । अथ द्वयोश्चेतनयोरेका वृत्तिर्भेदाग्रहो वा तेनैककर्तृकत्वाभिमान इत्यत आह । **बुद्धिवृत्त्यविशिष्टायामिति** । ८२ । १

बुद्धिर्ज्ञानसाधनमिति । बुध्यते ऽनेनेति व्युत्पत्त्या मन उच्यते गन्धादिविषयतया सुखदुःखविषयतया चेयं बुद्धिर्भाव्यमाना निर्वेदाय कल्पत इति । भाष्यकारः क्रमप्राप्तं मनोलक्षणसूत्रमवतारयन्नुक्तसूत्रमन्यान्यपि लक्षणान्याह **स्मृतीत्यादि** । **सुखादिप्रत्यक्षमित्यादिशब्देन** विषयतयेच्छादयः सङ्गृहीताः । **इच्छादय इत्यादिशब्देन** कार्यतया सुखादयः सङ्गृहीताः ।

**युग-ङ्गम् (सू. १६) ॥**

अनिन्द्रियनिमित्ता अबाह्येन्द्रियनिमित्ता इत्यर्थः । **स्मृतीत्या**दिभाष्यस्य वार्त्तिककारस्तात्पर्यमाह । **स्मृतीति** । **अनेनेन्द्रिये**त्यादि भाष्यं व्याचष्टे । **घ्राणादीति** । इन्द्रियगतरूपादिव्यावृत्त्यर्थमुक्तमिन्द्रियसंयोगीति तथा ऽप्याकाशादीनां मनस्त्वं मा भूदत उक्तं **सहकारीति** । तथा ऽप्यालोकस्य मा भूदत उक्तं **निमित्तान्तरमिति** । तथा ऽप्यात्मनो मा भूदत उक्त**मव्यापीति** । आक्षिप्य भाष्यं समाधत्ते **कथं पुनरिति** । चक्षुरादिभ्यो ऽनुत्पत्तौ सत्यां क्रियात्वात् । अत्र च य आत्मनो विशेषगुणास्ते सर्व इन्द्रियजन्मानो यथा गन्धादिप्रत्ययाः तथा च विवादाध्यासिताः स्मृत्यादयः तस्मात्तेऽपीन्द्रियजन्मानः यच्च संस्कारादिषु न करणत्वप्रसङ्ग इति । सोऽयं हेतुमाक्षिप्य समाधत्ते । **अयुगपदिति** । **संबन्धिभेदादिति** । यदा तस्यैव मनःसंयुक्तस्येन्द्रियस्य क्रमेण नीलादयो ऽर्थाः सम्बध्यन्ते तदा तत्क्रमात् क्रम इत्यर्थः । बुभुत्साक्रमं गृहीत्वा सिद्धान्ते ऽपि मनःपरित्यागो मा भूदत उक्तं **सत्यां बुभुत्सायामयुगपद्ग्रहणादिति** । ८४

न हि किं चित्करणं सम्बद्धमपि भवतीति स्याद् यद्येवं धारावाहिकज्ञानोत्पत्तिर्न स्यात् । द्वितीयादिज्ञानेष्वपि सैव सामग्रीति सकृदेव यावत्कर्तव्यकरणात्समर्थस्य क्षेपायोगात् । क्षेपयोगे वा पश्चादपि न जनयेद् अविशेषात् । न

